# सटीकप्रबोधचंद्रोदयनाटक.

हें पुस्तक

पुणें पेठ शनवार मेहुणपुरा

येथें

रावजीश्रीधरगोंधळेकर

यांणीं

विद्वान्मंडळीच्या साहाय्यानें

शुद्ध करून

आपले

जगद्धितेच्छु छापखान्यांत छापिलें.

ता. २३ मे सन १८७२

इसवी.

॥श्री॥

# अथसटीकप्रबोधचंद्रोदयनाटकं प्रारभ्यते.

श्रीगणेशायनमः अथकमप्यंतेवासिनंबहुशोध्यापितवेदांतसिद्धांतमपितत्रा वबोधपराङ्मुखंनाटकादिरसिकपरमकारुणिकाःश्रीकृष्णमिश्राःप्रबोध-चंद्रोदयाख्यनाटकव्याजेनतंबुबोधयिषवस्तद्रचयंतिस्म तत्राद्यपद्यद्वयेनां-दीसंज्ञकेनिर्विघ्नपरिसमाप्तयेकृतंमंगलंनिबध्नंति तत्रनांदीस्वरूपंनंदंतिका-व्यानिकवींद्रवर्गाःकुशीलवाःपारिषदाश्चसंतः यस्मादलंसज्जनसिंधुहंसी-तस्मादियंसाकथितेतिनांदी इतिनांदीस्वरूपंतल्लक्षणंच आशीर्नमस्क्रियाव-स्तुश्लोकःकाव्यार्थसूचकः नांदीतिगद्यगदितपदैर्द्वादशभिस्तथा इतिनांदीस्व रूपलक्षणलक्षितमाद्यपद्यद्वयं तत्राद्यंपद्यंव्याख्यायते मध्यान्हेति वयंतत्औ पनिषदंमहस्तेजःउपास्महेसेवयामः कीदृशंमहःसांद्रानंदंसांद्रोनिबिडोनित्योय

> मध्यान्हार्कमरीचिकास्विवपयःपूरोयदज्ञानतःखंवायु
> र्ज्वलनोजलंक्षितिरितित्रैलोक्यमुन्मीलति॥ यत्तत्त्वंवि
> दुषांनिमीलतिपुनःस्रग्भोगिभोगोपमंसांद्रानंदमुपा
> स्महेतदमलंस्वात्मावबोधंमहः॥१॥

आनंदस्तद्रूपं पुनःकीदृशंमहःअमलंअविद्यातत्कार्यादिदोषशून्यं पुनःकथंभूतं स्वात्मावबोधं स्वात्मनैवस्वस्वरूपेणैवावबोधःप्रकाशोयस्यस्वप्रकाशमित्यर्थः त-त्किम् यदज्ञानतोयस्याज्ञानात्इतीदंत्रैलोक्यमुन्मीलतिप्रादुर्भवति इदंकिंत-त्राह खमित्यादि अज्ञानात्प्रपंचोत्पत्तिंलोकदृष्टांतेनाह मध्यान्हार्कमरीचि-कास्रूपयःपूरइव यथामध्यान्हेसिकतादिप्रतिफलितेष्वर्ककिरणेषुतद्विषया-ज्ञानात्पयःपूरज्ञानंजायते तथासति आनंदादिरूपंब्रह्माज्ञानात्प्रपंचजनिरित्य र्थः एवंचेत्कथमनर्थनिवृत्तिरित्याशंक्यसदृष्टांतमाह यत्तत्त्वंयस्यत्रैलोक्यस्य तात्विकंस्वरूपंविदुषांज्ञानिनांपुनर्निमीलतिनश्यतिआत्मस्वरूपातिरिक्तंनभ-वति किंतुब्रह्मस्वरूपेणतिष्ठतीत्यर्थः तत्रदृष्टांतःस्रग्भोगिभोगोपमंस्रजिमा-

लायामुत्पन्नोयोभोगिभोगः सर्पदेहस्तेनोपमेयं तथाचायमर्थः मालातत्वसाक्षात्कारात्तद्भिन्नः सर्पदेहोनभवति किंतु तत्वरूपेणावतिष्ठते एवंब्रह्माद्वैतसाक्षात्कारात्स्वरूपेणप्रपंचोनतिष्ठतीति एवंच सति अज्ञाननिवृत्तिःप्रयोजनं प्रयोजनकामोधिकारी प्रतिपाद्यप्रतिपादकभावः संबंधः ऐक्यमभिधेयमित्यादिप्रदर्शितं १ अपिचेति प्राक्तनमंगलसमुच्चयार्थोऽपिचशब्दः अंतरिति चंद्रार्धमौलेश्चंद्रशेखरस्य प्रत्यग्ज्योतिः जडानृताहंकारादिभ्यः प्रातिकूल्येनसत्यज्ञानानंदादिरूपत्वेनांचति प्रकाशतेतत्प्रत्यक्तच्चतज्ज्योतिश्चप्रकाशरूपं जयति जयः सर्वोत्कर्षेणवर्तनं अन्यनिरपेक्षयेत्यर्थः कीदृशंप्रत्यग्ज्योतिः अंतर्नाड्यां सुषुम्नायांनियमितः सन्निरुद्धश्वासोमरुच्चतेनलंघितसुल्लंघितंब्रह्मरंध्रंयेनतत् कस्मिन्सति स्वांते अंतःकरणे शांतिप्रणयिनि उपशमंगतेसति पुनःकीदृशं

अपिच अंतर्नाडीनियमितमरुल्लंघितब्रह्मरंध्रंस्वांतेशांतिप्रणयिनिसमुन्मीलदानंदसांद्रम् प्रत्यग्ज्योतिर्जयतियमिनःस्पष्टलालाटनेत्रव्याजव्यक्तीकृतमिवजगद्व्यापिचंद्रार्धमौलेः २ नांद्यंतेसूत्रधारः अलमतिविस्तरेण यद्यं आदिष्टोस्मि सकलसामंतचक्रचूडामणिमरीचिमंजरीनीराजितचरणकमलेन बलवदरिनिवहवक्षस्तटकपाटपाटनप्रकटितनरसिंहरूपेण

ज्योतिःसमुन्मीलत्प्रकटीभवन्नानंदः स्फुरंतेनसांद्रमभिन्नं स्वप्रकाशस्फुरवाभिन्नमित्यर्थः कीदृशस्यचंद्रार्धमौलेः यमिनः यमोस्यास्तीतियमी तस्य योगासक्तस्येत्यर्थः उत्प्रेक्ष्यते कीदृशमिवज्योतिः स्पष्टंप्रकटंललाटसंबंधि लालाटंनेत्रं तृतीयचक्षुः तद्व्याजेन तन्मिषेण अव्यक्तंव्यक्तंसंपन्नंतथाभूतंव्यक्तीकृतं प्रकटीकृतमिव पुनःकीदृशं जगद्व्यापि जगद्व्याप्नोति विषयीकरोतितत् श्रीमद्भगवत्सुकृषिउत्प्रेक्षाऽतीवसमीचीनेतिहृदयं अनेनाद्यपद्यद्वयेनवेदांतसिद्धांतरहस्यंप्रकटयनाभिप्रेणाभिधेयंनिरणायि २ नांद्यभिनयेनकथांप्रस्तावयति नांद्यंतेसूत्रधार इति नांदीनाटकादौपद्यादिरूपा सूत्रधारोनाटकाचार्यः वक्तीतिशेषः तल्लक्षणंतु चतुरोनाट्यनिष्णातोनेकभूषासमावृतः नानाभाषणतत्वज्ञोनाट्यशास्त्रार्थतत्ववित् नानागतिप्रचारज्ञोरसभावविशारदः वेषोपचारचतुरोनानाशिल्पिक

लान्वितः छंदोविधानतत्वज्ञःसर्वशास्त्रविचक्षणः नृत्तगीताद्यभिनयकलालाव
धारणः अवधायप्रयोक्ताच योगतृणामुपदेशकः एवंगुणगणोपेतःसूत्रधारोभि
धीयतइति अलमिति नांदीपाठेनैवसमयोननेतव्यइतिभावः आदिष्टोस्मीति आ-
दिष्टोस्मि आज्ञप्तोस्मिगोपालेनेत्यन्वयः कीदृशेन गोपालेन श्रीमतालक्ष्मीवता
लक्ष्मीवत आज्ञाअवश्यंविधेयेतिभावः पुनःकीदृशेनगोपालेन सकलाःसर्वेचेसा-
मंताः मंडलेश्वरास्तेषांचक्रंसमूहः तस्यचूडामणयोमुकुटमणयस्तेषांमरीचिमं-
जर्यःकिरणपरंपरास्ताभिर्नीराजितंचरणकमलंयस्य तादृशेन पुनःकीदृशेन गो-
पालेन बलवंतोयेअरिपुंजाः शत्रुसमाजास्तेषांवक्षस्तटमेवकपाटंतस्यपाटनेवि
दारणेप्रकटितंनरसिंहरूपंयेन पुनःकीदृशेनगोपालेन प्रबलतराणियानि

> प्रबलतरनरपतिकुलप्रलयमहार्णवमग्नमेदिनीसमुद्धर
> णमहावराहेण निखिलदिग्विलासिनीकर्णपूरीकृत
> कीर्तिलतापल्लवेन समस्ताशास्तंबेरमकर्णतालास्फा
> लनबहलतरपवनसंपातनर्तितप्रतापानलेन श्रीमता
> गोपालेन गद्यंयथा खल्वस्यसहजस्कृद्दोराज्ञःश्री
> कीर्तिवर्मदेवस्यदिग्विजयव्यापारांतरितपरब्रह्मानंदर
> सैरस्माभिःसमुन्मीलितविविधविषयरसस्पर्शदूषि-
> ताइवातिवाहितादिवसाः

नरपतिकुलानितेषांप्रलयोविनाशः सएवमहार्णवस्तस्मिन्मग्नायामेदिनी तस्याः
समुद्धरणेवराहइववराहस्तेन पुनःकीदृशेन गोपालेन निखिलाः समस्तादिग्रूपा
विलासिन्योवारांगनास्तासांआकर्णपूरः कर्ण पूरः संपन्नः कर्णपूरीकृतःश्रवणा
लंकारीकृतः कीर्तिर्लितापल्लवोयेन एतेनदिगंतविश्रांतकीर्तित्वंध्वनितं पुनःकी-
दृशेन समस्तायेआशास्तंबेरमादिग्गजास्तेषांकर्णतालास्फालनेनबहलतरो
यः पवनसंपातस्तेननर्तितः प्रवर्तितः प्रतापरूपः अनलोयस्यतादृशेनअनेन
दिगंतविश्रांतप्रतापइतिध्वनितं आज्ञप्तोस्मीत्युक्तं तामाज्ञामेवदर्शयतियथे
ति खलुप्रसिद्धौ अस्यसहजस्कृद्दः स्वभावकोमलस्य श्रीकीर्तिवर्मदेवनाम्नो
राज्ञःकीर्तिरेवकवचंयस्यसएवदेवस्तस्य योदिग्विजयस्तद्व्यापारेणांतरितोवि-
लंबितः परब्रह्मानंदरसोएषांतादृशैरस्माभिःसम्यगुन्मीलिताःसम्यगनुभूताःवि-

विधाअनेकप्रकाराविषयाः स्रगादयस्तेषांरसस्पर्शेन आनंदानुभवेनदूषिताइव
विषयसुखस्यहेयत्वात् दिवसा अतिवाहिता अतिक्रांताः कृत्यकृत्यतांदर्शयति
यतइति नीताइति नृपतेर्विपक्षावैरिणः क्षितिभुजोभूमिपालाः क्षयंनीताः प्रा-
पिताः प्रथितैःख्यातैः अमात्यैर्मंत्रिभिः क्षितिःरक्षावती अभूत् अस्यनृपतेर्भु-
विसाम्राज्यंविहितंकृतं कीदृशं साम्राज्यंक्षितिपालानांमौलिमालामुकुटश्रेण
यस्ताभिरर्चितंपूजितं कीदृश्यांभुवि पयोनिधयः सागराएवमेखलापरिखा

इदानींतुकृतकृत्यावयंयतः पद्यं नीताःक्षयंक्षितिभुजो
नृपतेर्विपक्षारक्षावतीक्षितिरभूत्प्रथितैरमात्यैः साम्राज्य
मस्यविहितंक्षितिपालमौलिमालार्चितंभुविपयोनिधिमे-
खलायां ३ तदयंशांतरसप्रायप्रयोगाभिनयेनात्मानंवि
नोदयितुमिच्छामः तद्यत्पूर्वंतत्रभवद्भिः कृष्णमिश्रैःप्रबो
धचंद्रोदयंनामनाटकंनिर्माय भवतःसमर्पितमासीत् त
दद्य राज्ञःश्रीकीर्तिवर्मणःपुरस्तादभिनेतव्यंभवता अ-
स्तिचास्यभूपतेःसपरिषदोऽवलोकनकुतूहलमिति तद्भ
वतु गृहंगत्वा गृहिणींसमाहूयसंगीतकमनुतिष्ठामि प
रिक्रम्य नेपथ्याभिमुखमवलोक्य आर्येइ
तस्तावत् प्रविश्यनटी बा॰ एसह्मि आण
वेदु अज्ज उत्तो कोणिओओ अणुचिट्ठ अ
दुत्ति सूत्रधारः आर्येविदितमेवभवत्या प-
अस्तिप्रत्यर्थिपृथ्वीपतिविपुलबलारण्यमूर्च्छ
त्प्रतापज्योतिर्ज्वालावलीढत्रिभुवनविवरोविश्वविश्रांतकीर्तिः

यस्यांतस्यां ३ कृतकृत्यता प्रयोजनमाह तदयमित्यादि शांतरसप्रायः शांतरसप्र-
धानोयः प्रयोगाभिनयोनाट्यानुकारस्तेनेत्यर्थः आत्मविनोदोपायमाह तद्यदिति
तत्रभवद्भिःपूज्यैः अत्रभवत्तत्रभवच्छब्दौपूज्यार्थौ परिक्रम्येत्यंतंस्रगमं नेपथ्यंना-
ट्यःपाठायपटीबंधः प्रविश्यनटीतिवदतीतिशेषः छाया॰एषास्मि आज्ञापयत्वार्य
पुत्रः कोनियोगोऽनुष्ठीयतामिति कथंविदितमित्याह अस्तीति गोपालोऽस्तीति-
योजना कीदृशोगोपालः प्रत्यर्थिनोरिपवोयेपृथ्वीपतयः तेषांविपुलंबहलंबलंसैन्यं

तदेवारण्यंतस्मिन्मूर्च्छन्‌वृद्धिंप्रामुवन् यः प्रतापः सएवज्योतिस्तस्यज्वालयाअव
लीढमाक्रमितं त्रिभुवनविवरंयेनसः पुनः कीदृशः विश्वस्मिन्‌विश्रांताविख्याता की-
र्तिर्यस्यस कः येनकीर्तिवर्म्मानरपतितिलकोभूयः साम्राज्ये अभ्यषेचि अभिषि
क्तः किंकृत्वा असिलतेवखड्गवल्ल्येवमित्रं सहायस्तन्मात्रेण भूपालान् प्रसभं
हठेनजित्वा खड्गएवतस्य सहायोनान्यइत्यर्थः ४ तस्यकीर्त्यंतरमप्याह अपिचे-
ति अद्यापीति रणक्षोणयः संग्रामभूमयः विततैर्विस्तीर्णैर्नादैः शब्दैरद्यापि इदा
नीमपि यस्य यशांसि उद्गायंति कीदृशैः नादैः प्रचंडानिलेन महावायुना प्रक्ष
भ्यंतो ये करिणस्तेषांकुंभागंडस्थलानि तेषांकूटंसमूहस्तस्यकुहराणिबिलानि ते-

गोपालोभूमिपालान्प्रसभमसिलतामित्रमात्रेणजि
त्वासाम्राज्येकीर्तिवर्मानरपतितिलकोयेनभूयोभ्यषे
चि ४ अपिचपअद्याप्युन्मदयातुधानतरुणीचंचत्क
रास्फालनव्यावल्गन्नृकपालतालरणितैर्नृत्यत्पिशाचां
गनाः उद्गायंतियशांसियस्यविततैर्नादैःप्रचंडानिल
प्रक्षुभ्यत्करिकुंभकूटकुहरव्यक्तैरणक्षोणयः ५ ते-
नचशांतपथप्रस्थितेनात्मविनोदार्थंप्रबोधचंद्रोदया
भिधानंनाटकमभिनेतुमादिष्टोस्मि तदादिश्यतांभ
रताः वर्णिकापरिग्रहणायनटी सविस्मयं अज्जउत्त
अच्चरिअं अच्चरिअं जेण तन्हा णि अभु अबलविक्कमे
क्कणि भ्मात्तिदस अलरा अमंडलेण आकण्ण किद्

पुव्यक्तैः प्रकटैः वायुपूर्णानिहस्तिकुंभस्थलानि शुष्काणि ध्वनंतीतिभावः पुनः कीदृशैः
र्नादैः उन्मदाः उत्कृष्टमदयुक्तायायातुधानतरुण्योराक्षसस्त्रियस्तासांचंचंतोदीप्य
मंतोयेकरास्तेषामास्फालनंपरस्पराघातः करतालिकारूपः तेनव्यावल्गंति चपलानि
यानिनृकपालानि तान्येवतालाः वाद्यविशेषास्तेषांरणितानि शब्दितानियेषु कीदृ
श्योरणक्षोणयः नृत्यंत्यः पिशाचांगनायासुता इतिगानविशेषोध्वनितः ततंवी-
णादिकंवाद्यमानद्धंमुरजादिकं वंशादिकंतुसुषिरंकांस्यतालादिकं घनमित्यमरः ५
एतावताकिंस्यात्तत्राह तेनचेति अभिनेतुंअभिनयेन प्रसादयितुं अभिनय प्रदर्शने
किमपेक्ष्यनेतदाह तदादिश्यतामिति भरताः नटाः वर्णिकापरिग्रहणायनटवेषपरिग्र-

हाय नटीप्राकृतं अज्जेति छाया आर्यपुत्र आश्चर्यमाश्चर्यंयेन समरविजयल क्ष्मीः आसादितापालेति प्राकृतप्रांतेप्राकृतान्वयः किंकृत्वा कर्णसैन्यसागरंनि- र्मथ्य केनकमिव मधुमथनेनश्रीकृष्णेन क्षीरसमुद्रमिव यथाक्षीरसागरं निर्म- थ्यं श्रीकृष्णेनलक्ष्मीर्लब्धा एवंतेनराज्ञेत्यर्थः किंभूतेन येन मधुमथनेनच तथा तेनोक्तप्रकारेण निजभुजबलविक्रमैकेणनिर्भर्त्सितं सकलंराजमंडलंयेन कीह शंकर्णसैन्यसागरं आकर्णाकृष्टः कठिनोयः कोदंडदंडस्तस्माद्वर्षन् यः शरनिक रो बाणसमूहस्तेनजर्जरीकृतास्तुरंगास्तएवतरंगमालायस्मिन् पुनःकीदृशम्

कठ्ठिणकोअंडदंडबहलवरिसंतसरणिकरजज्जरीकि
ततुरअतरंअमालं णिरंतरणिबडंतत्तिररवविरिव
तंसच्छसहस्सपलत्थउत्तुंअमाअंगमहामहीहरसह
स्सं भमंतभुअदंडचंडमंदराभिघादधुमंतसअलप
त्तिसलिलसंघादं कण्णसेण्णसाअरं णिम्महिअ म
हुमहणेणेव क्षीरसमुद्दं आसादिदा समरविजअल
छी: तस्स संपदं सअलमुणिअणसलाहिणिज्जवी
रचरिदस्सकधं एरिसोउवसमो संवुत्तो सूत्रधारः
आर्येनिसर्गसौम्यमेवब्राह्मंज्योतिःकुतोपिकारणा
त्प्राप्तविकारमपिपुनःस्वभावमेवावतिष्ठते एतेनब्र
ह्मणिस्वभावेनैर्मल्यंप्रदर्श्यअविद्याकृतंविकारंदर्श-
यति यतः सकलभूपालकुलप्रलयकालाग्निरुद्रेण
चेदिपतिनासमुन्मूलितं चंद्रान्वयपार्थिवानांपृथि-
व्यामाधिपत्यंस्थिरीकर्तुमयमस्यसंरंभः

निरंतरंनिपतंतितीक्ष्णानिविक्षिप्तानिइतस्ततः पतितानिशस्त्राणि सहस्राणि अप रिमितानि शस्त्राणितैः पलस्थाः पर्यस्ताउत्तुंगायेमातंगाः करिणः तएवमहामहीध- राः पर्वतास्तेषां सहस्रंयस्मिन् पुनःकीदृशं भ्रमन्योभुजदंडः सएवचंडोमंदर स्तदभिघातेन घूर्णतःसकलाःयेपत्तयः तएव सलिलसंघातोजलसमूहोयस्मिन् तस्येति तस्यसांप्रतंसकलमुनिजनश्लाघनीयवीरचरितस्यकथमीदृशउपशमः संवृत्तः निसर्गसौम्यंस्वभावसौम्यं सकलेति सकलायेभूपालाः तेषांकुलंतत्र

प्रलयकालाग्निरिवरुद्रः क्रूरः तेनचेदिदेशाधिपतिनाराज्ञा शिशुपालेन समुन्मूलितं समुत्पाटितं सोमवंश्यानांराज्ञांकीर्तिवर्मप्रभृतीनां रक्षितॄणामाधिपत्यं स्थिरीकर्तु मयमस्यसंरंभः क्रोधः नैमित्तिकः नस्वाभाविकः असुमर्थंप्रकारांतरेणाह कल्पांतेति कल्पांतेयोवातस्तेनसंक्षोभउच्चलनंतेनलंघिता अशेषभूभृतः पर्वतायेन तस्य महोदधेः समुद्रस्य ताएव प्रकृतिभूताएव स्थैर्यप्रसादमर्यादाः स्थैर्यंनिश्चलता प्रसादः स्वच्छता मर्यादावेलानुल्लंघनं ७ तथाविधाः तादृशाः पुरुषाः पुनः शांतिमेवप्रपद्यंते प्राप्नुवंति किंकृत्वा क्षितिंप्रति अवतीर्य किमर्थं भूतहिताय प्राणिनांहिताय पौरुषमेवपुरुषार्थएवभूषणंयेषांते तथानिष्पादिता-

पश्यतथा पद्यं कल्पांतवातसंक्षोभलंघिताशेषभू
भृतः स्थैर्यप्रसादमर्यादास्ताएवहिमहोदधेः ७
अपिच भगवन्नारायणांशसंभूताभूतहितायत
थाविधाःपौरुषभूषणाःपुरुषाःक्षितिमवतीर्यनिष्पा
दितोरुकृत्याःपुनःशांतिमेवप्रपद्यंते यथापरशुरा
ममेवाकलयतुभवतीतावत् येनत्रिःसप्तकृत्वोनृप
बहलवसामांसमस्तिष्कपंकप्राग्भारेकारिभूरिच्छ्युतरुधिरसरिद्वारिपूरेभिषेकः यस्यस्त्रीबालवृद्धा
वधिनिधनविधौनिर्दयोविश्रुतोसौराजन्योच्चांसकू
टक्रथनपटुरटद्घोरधारःकुठारः ८ सोपिस्ववीर्याद्व
तार्यभारंभूमेःसमुत्खायकुलंनृपाणा प्रशांतकोप
ज्वलनस्तपोभिःश्रीमान्मुनिःशाम्यतिजामदग्न्यः ९

निरूरूणिमहांतिकृत्यानियैः येनेति सोपिस्ववीर्यादित्यनेन युग्मं सोपिश्रीमान्जामदग्न्योमुनिः तपोभिः प्रशांतकोपज्वलनः सन् शाम्यति शांतिंगच्छति किंकृत्वा नृपाणां कुलं समुत्खाय समुत्पाट्य भूमेः भारं स्ववीर्यात्स्वसामर्थ्याद-वतार्यचेतियोजना द्वितीयश्लोकस्य अनेनकृतकृत्यतादर्शिता सकः येन त्रिः सप्तवारमिति त्रिःसप्तकृत्वः एकविंशतिवारं भूरिच्युतंयद्रुधिरंतस्ययासरित्तस्यावारिपूरे अभिषेकः स्नानं तर्पणंच अकारिकृतं कीदृशेवारिपूरे नृपाणां राज्ञांबहलोभूयान्वसाशुद्धमांसस्नेहश्चमांसंचमस्तिष्कपंकः ललाटांतर्गतो

धातुश्च एतानिप्राग्भारेतारेयस्यताहशे पुनःस कः यस्यासौकुठारः परशुः क्षि-
यश्चबालाश्चवृद्धाश्चतान्येवावधिस्तदवधियन्निधनंमारणंतद्विधौतस्मिन्कर्त-
व्येनिर्दयः अतिकठिनःविश्रुतः विख्यातः कीदृशः कुठारः राजन्यानांउच्चाये
अंसास्कंधास्तेषांकूटंसमुदायः तस्य क्रथने विनाशेपटुकुशलारटंतीशब्दाय-
मानाघोराभयानकाधारायस्य ८।९ दार्ष्टांतिकमाह तथायमिति विवेकमो
हयोर्जयपराजयाभिनयेन नाट्यंरचयितुंसंगतिमारचयति येनचेति विवे-
केनेति येनऊर्जितंबलवंतंकर्णंनिर्जित्य श्रीकीर्तिवर्मनृपतेरुदयउत्कर्षः कृतः
तत्रदृष्टांतोयथा विवेकेनेव आत्मयाथात्म्यज्ञानेनेवमोहं संसारमूलकारणमि-

युग्मं तथायमपिकृतकर्तव्यःसंप्रतिपरमामुपशाम
निष्ठांप्राप्तः येनच विवेकेनेवनिर्जित्यकर्णंमोहमिवोर्जि
तं श्रीकीर्तिवर्मनृपतेर्बोधस्येवोदयःकृतः १० नेप-
थ्येआः पापशैलूषाधमकथमस्मास्कजीवत्सुस्वामि
नोमहामोहस्यविवेकसकाशात्पराजयमुदाहरसि
सूत्रधारः ससंभ्रमंविलोक्य अये उत्तुंगपीवरकु
चद्वयपीडितांगमालिंगितःपुलकितेनभुजेनरत्या
श्रीमान्जगंतिमदयन्नयनाभिरामःकामोयमेति
मदघूर्णितनेत्रपद्मः ११ मद्वचनाच्चायमुपजातक्रो
धइवोपलक्ष्यते तदपसरणमेवास्माकमितःश्रेयइति
निष्क्रांतौप्रस्तावना

वनिर्जित्यबोधस्येवआत्मसाक्षात्कारस्येवउदयःकृतः १० मोहंजित्वेति बोधस्ये
वोदयइतिश्रुत्वामोहपक्षीयोनटाध्यक्षमधिक्षिपति नेपथ्ये आःपापेति शैलू
षाधमनटाधम उत्तुंगेति अयंकामःएतिसमायाति कीदृशःकामः पुलकिते-
नरोमांचितेन भुजेनरत्या उत्तुंगमत्युच्चंपीवरंमांसलंयत्कुचद्वयंतेनपीडितमं-
गंयथाभवतितथा आलिंगितः पुनःकीदृशः श्रीमान्शोभावान्जगंतिसचे
तनानिमदयन्मत्तानिकुर्वन् तथानयनयोः अभिरामः तथामदेन घूर्णितेनेत्र
कमलेयस्यसः भ्रांतनेत्रः ११ प्रस्तावनाकथासंगतिः तल्लक्षणं अर्थस्यप्रति
पाद्यस्य कथाप्रस्तावनामतेति

यथानिर्दिष्टइति पूर्वश्लोकइतिशेषः आःपापशैलूषाधमेतिपूर्वफक्किमिति शेषः भरताधमनटाधमेत्यर्थः प्रभवतीति विदुषामपि पंडितानामपि मनसिशास्त्रसंभवोविवेकः तावत्पर्यंतं प्रभवति समुत्पद्यते तावत्कथं यावत्पर्यंतं इंदीवराक्षीणांकमललोचनानां दृष्टिविशिखाः कटाक्षरूपाः बाणान् पतंतिनासांकटाक्षप्रक्षेपेरंधीभूतमिवसचेतनंभवतीतिभावः १२ रम्यंहर्म्यतलमिति एतानिमेमम अमोघानिसफलानिशास्त्राणिपरितः जयंति यदिसर्वोत्कृष्टानि यदिवर्तंतेतत्तदा असौ भोःशैलूषाधमवर्णितोविवेकस्त

ततःप्रविशतियथानिर्दिष्टःकामोरतिश्च कामःसक्रोधं आः पापेतिपठित्वा ननुरेभरताधम प्रभवतिमनसिविवेकोविदुषामपिशास्त्रसंभवस्तावत् निपतंतिदृष्टिविशिखायावन्नेंदीवराक्षीणां १२ रम्यंहर्म्यतलंनवाःसुनयनागुंजद्विरेफालताःप्रोन्मीलन्नवमल्लिकाःसुरभयोवाताःसचंद्राःक्षपाः यद्येतानिजयंतिहंतपरितःशास्त्राण्यमोघानिमेतद्भोःकीदृगसौविवेकविभवःकीदृक्प्रबोधोदयः १३ रतिःअज्जउत्त गरुओरवुमहारा अमहामोहस्सपडिवरखोविवेओत्तितक्केमि

स्यविभवःसामर्थ्यंकीदृक् अथप्रबोधोदयश्चकीदृक् द्वयमपिनसंभवतीतिभावः एतानिकानितान्याह रम्यमिति रम्यस्यगृहस्यतलंभूमिः नवाः नूतनाःसुनयनाःसुलोचनाः गुंजंतःशब्दंकुर्वंतोद्विरेफाभ्रमराःयासु तादृश्योलताःप्रोन्मीलंत्योविकसनशीलाः नवाःमल्लिकामालत्यः सुरभयोवाताःसुगंधावायवःसचंद्रानिशाःएतानिममशास्त्राणि १३ रतिरिति वदतीतिशेषः छा॰ आर्य पुत्रगुरुःखलुमहाराजमहामोहस्यप्रतिपक्षोविवेकइतितर्कयामि

कामः त्वंस्त्रीस्वभावसुलभंभयंमाकुरु अहमपिसमर्थोस्मीत्याह अपि-
यदिविशिखाइति अपियद्यपिविशिखाः शराः शरा सनंधनुः एतद्वयंकुसुममयं
वर्तते तथापिससुरासुरं सुरासुरैर्देवदैत्यैः सहवर्तते तत्ससुरासुरं अखि-
लंसर्वमिदंजगत् भोवरोरु ममाज्ञामतिलंघ्य उल्लंघ्य धृतिं धैर्यंमुहूर्तंक्षण
मपि नएतिनप्राप्नोतीति १४ उक्तमर्थंप्रकटयति तथाहि अहल्यायाजा
रइति सुरपतिःइंद्रः अहल्यायाः गोतमपत्न्याः जारः उपपतिरभूत् प्र-
जानांनाथोब्रह्मा आत्मतनयांशतरूपांअयासीत् स्वपुत्रींप्रतिगतः मिथुन

कामः प्रियेकुतस्तवेदंस्त्रीस्वभावसुलभंविवेकाद्भ
यमुत्पन्नं पश्यपश्य अपियदिविशिखाःशरास
नंवाकुसुममयंससुरासुरंतथापि ममजगदखि
लंवरोरुनाज्ञामिदमतिलंघ्यधृतिंमुहूर्तमेति १४
तथाहि अहल्यायाजारःसुरपतिरभूदात्मतनयां
प्रजानाथोयासीदभजतगुरोरिंदुरबलां इतिप्रायः
कोवानपदमपथेकार्यतमयाश्रमोमद्बाणानांकइव
भुवनोन्माथविधिषु १५ रतिः अज्ज उत्त एवंण्णे
दंतधावि महासहाअसंपण्णो संकिदव्वो अरादीज
दोस्सजमणि अमच्चमुहा अमच्चा महाबलाःसुणी
अदि कामः प्रियेयानेतान्राज्ञोविवेकस्यबलवतोय
मादीनमात्यान् पश्यसि तएतेनियतमस्माभिरभि
युक्तमात्राद्रागेवविघटिष्यंते

भावंप्राप्तइत्यर्थः इंदुः शशांकः गुरोर्बृहस्पते रबलांस्त्रियं अभजत सिषे-
वे इति एवंप्रकारेण प्रायः अतिशयेन मयाकोवापुमान् पुरुषार्थी अपथेअ-
मार्गे पदंस्थानंन अकार्यत किंतुसर्वोपिकारितएवेत्यर्थः किमधिकंवाच्यं
भुवनानांउन्माथ उन्मादस्तद्विधिषु तत्कर्तव्यतासुमदीयायेबाणास्तेषांश्र-
मः कइवनकोपीत्यर्थः १५ रतिः आर्यपुत्र एवमेतत् तथापिमहासहायसं-
पन्नः शंकितव्योरातिः यतोस्ययमनियमप्रमुखा अमात्या महाबलाः श्रू-
यंते अभियुक्तमात्राः कृताभियोगाद्रागेव झटित्येव विघटिष्यंते विवेकाद्भे-

दंभाप्स्यंति अहिंसेति कोपस्याहिंसाकेवनकापीत्यर्थः ममकामस्यब्रह्मचर्या दयः केनकेपीत्यर्थः अमीसत्यास्तेयापरिग्रहा लोभस्य पुरतः केनकेपीत्यर्थः एतावता एतेस्फरवेन जेतुंशक्याइतिभावः १६ यमादेः किंकार्यमत आह यमेति ईषत्करं स्फुकरं समुन्मूलनंनाशोयेषांते एतेषांविजयेउपायांतरमाह स्त्रियएवेति अस्मद्गोचराः अस्मदधीनाः अधीनत्वेहेतुमाह यतइति संत्विति विलोकनमवलोकनं भाषणं मधुरालापः विलासोविभ्रमः परिहासकेलिर्नर्मकथाक्रीडा परिरंभः आलिंगनं इमानिसंतु तिष्ठंतु कामिनीनांस्मरणमपि

तथाहि अहिंसाकेवकोपस्यब्रह्मचर्यादयोमम लोभस्यपुरतःकेमीसत्यास्तेयापरिग्रहाः १६ यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधयस्तुनिर्विकारैकचित्तसाध्यत्वादीषत्करसमुन्मूलनाएव अपिच स्त्रियएवामीषांकृत्याःतेनैतेअस्मद्गोचराएववर्तंते यतःसंतुविलोकनभाषणविलासपरिहासकेलिपरिरंभाःस्मरणमपिकामिनीनामलमिहमनसोविकाराय १७ विशेषतश्चैतेसदमास्यदंभादिभिरस्मत्स्वामिवल्लभैरभियुज्यमानानरपतिमंत्रिणमधर्ममेवाश्रयिष्यंति रतिः स्फुदंमएतुह्माणंसमदमविवेअपहुदीणंचएक्कंउप्पत्तिठ्ठाणंति कामः आः प्रियेकिमुच्यतेएकमुत्पत्तिस्थानमिति ननु जनकएवास्माकमभिन्नः तथाहि संभूतःप्रथममिहेश्वरस्यसंगान्मायायांमनइतिविश्रुतस्तनूजः

मनसोविकाराय विकारंकर्तुं अलंसमर्थं १७ किंबहुना अस्मद्वशेस्थास्यंत्येवेत्याह विशेषतश्चेति अभियुज्यमानाः आज्ञाप्यमानाः नरपतिर्महामोहस्तन्मंत्रिणं अधर्मं अधर्ममूलामोहादयः स्फुदमिति श्रुतंमयायुष्माकंशमदमविवेकप्रभृतीनांचएकमुत्पत्तिस्थानमिति आः आर्ये एकमपि कर्तृत्वादाश्चर्यं तदेवाह तथाहीति संभूतइति ईश्वरस्यपरमात्मनः संगात्संबंधात् मायायां अविद्यायांमनइतितनूजः पुत्रः विश्रुतः लोकप्रसिद्धः प्र-

थमं आदौ संभूत उसन्नः तेन मनसा इदंसकलं त्रैलोक्यं विसृज्यविशेष-
तः स्सृष्वा अथो अनंतरं भूयोभूयो वारं वारं इदंप्रसिद्धं नो ऽस्माकंकु-
लद्दयं जनितं महामोहप्रधानं विवेकप्रधानंच १८ तदेवाह तयोरिति
रतिः अज्जेति आर्यपुत्र यद्येवंतत् किंनिमित्तंयुष्माकं सहोदराणा
मपि परस्परं एतादृशंवैरं सहोदराणामपि दृष्टमस्तिवैरमित्याह एका-
मिषेति सहोदराणांगोत्रजानां एकामिषप्रभवमेववैरं समुज्जृंभते प्र-

त्रैलोक्यंसकलमिदंविसृज्यभूयस्तेनाथोजनितमि
दंकुलद्दयंनः १८ तस्यचप्रवृत्तिनिवृत्तीद्वेधर्मपत्न्यौ
तयोःप्रवृत्यामुत्पन्नंमहामोहप्रधानंएकंकुलं निवृ
त्यांचद्दितीयंविवेकप्रधानमिति रतिः अज्ज उत्तज
इ एव्वं ताकिंणिमित्तंतुह्माणंसोअराणांपिपरोप्प
रं एआरिसंवेरं कामः प्रिये एकामिषप्रभवमेव
सहोदराणामुज्जृंभतेजगतिवैरमितिप्रसिद्धं ए
थ्वीनिमित्तमभवत्कुरुपांडवानांतीव्रस्तथाहिभुव
नक्षयकृद्विरोधः १९ सर्वमेवैतज्जगदस्मात्पित्रोपा
र्जितं तच्चास्माभिस्तावत्बहुभतयासर्वमेवाक्रांतं
तेषांतुविरलःप्रचारः तेनैतेपापाःसांप्रतंपितरम-
स्मांश्चोन्मूलयितुमुद्यताः रतिः संतंपावंसंतंपावं अ
ज्ज उत्त किंएदंपावंविद्देसमेत्तकेण तेहिं आरद्धं अ
हवा आत्थि उवा ओकोवि एत्थ मंतिदो कामः अप्य
स्त्यत्रकिंचिन्निगूढंबीजं

कटीभवति इतिजगतिप्रसिद्धं अत्रदृष्टांतमाह हिनिश्चितंकुरुपांडवानांपृ-
थ्वीनिमित्तंयथास्यात्तथात्तीव्रोदारुणः तथाप्रसिद्धः भुवनक्षयकृत् भुवनना
शकोविरोधो ऽभवत् १९ एकामिषप्रभवत्वंदर्शयति सर्वमेवेति शांतंपापं
शांतंपापं आर्यपुत्रकिमिदंपापं विद्देषमात्रेणैवतैरारब्धं अथवा अस्त्य
पायः कोपि अत्रमंत्रितः निगूढंगुप्तंबीजंकारणं आर्यपुत्रतत् किंनउद्भा
व्यते आर्यपुत्रकीदृशंतत्

हताशानां नष्टाशानां किंवदंतीजनश्रुतिः लोकप्रसिद्धिः नतुनिश्चयः विद्या आ-
त्मतत्वसाक्षात्कारः क्रूरकर्मकरणाद्राक्षसीत्युक्तिः रतिः हाधिक्धिक् कथम-
स्माकंकुलेराक्षसीतिवेपतेमेहृदयं किंवदंतीमात्रमेतदितिपुनराश्वासनं रतिः
अथतयाराक्षस्याकिंकर्तव्यं कामः प्राजापत्या हिरण्यगर्भसंबंधिनी सरस्व
तीवाणी पुंसइति पुंसः परमेश्वरस्य गृहिणीस्त्री मनोरूपंतनयंपुत्रंप्रसूय
उत्पाद्य लोकान्भूर्भुवादीन् क्रमात् अनुक्रमेण अस्रूत जनयामास कीदृ-

रतिः अज्ज उत्त ताकिंण उप्पाडी अदि कामः स्त्री
स्वभावात् भवतीभीरुरितिनतद्दारुणंपापीयसा
मुदाह्रियते रतिः सभयं अज्ज उत्त केरिसंतं कामः
प्रियेनभेतव्यंनभेतव्यं हताशानामाशामात्रमेतत्
अस्तिकिलैषाकिंवदंती अत्रास्माकंकुलेकालरात्रि
कल्पाविद्यानामराक्षसीसमुत्पत्स्यतइति रतिः स
भयं हद्धिहद्धिकहं अह्माणंकुलेररवसीनिवेबदि
मेहिदअं कामः प्रियेनभेतव्यंनभेतव्यं किंवदंती
मात्रमेतत् रतिः अधता एररवसी एकिंकादव्वं का
मः प्रिये अस्तिकिलतत्र प्राजापत्यासरस्वती पुं
सः संगसमुज्झितस्यगृहिणीमायेतितेनाप्यसाव
स्पृष्टापिमनः प्रसूयतनयंलोकानसूतक्रमात् त
स्मादेवजनिष्यतेपुनरसौविद्येतिकन्यायया तात-
स्तेचसहोदराश्चजननीसर्वंचभक्ष्यंकुलं २०

शस्यपुंसः संगेन संबंधेनसमुज्झितस्य रहितस्य असंगोह्ययंपुरुषइतिश्रुतेः
कीदृशीमाया तेनपुंसा अस्पृष्टापि असंबद्धापि असंबद्धाजनयतीत्ययुक्त
मितिनाशंकनीयं चुंबकपाषाणेनासंबद्धालोहशलाकाचुंबकंयातमनुयाति
इतिदृष्टंलोकेतद्वदियमसंबद्धापिईक्षणमात्रेणजनयतीत्यर्थः अघटितघटना
पटीयस्यामिदंसर्वमपिसंभाव्यतइत्याह मायेत्यनेनविशेषणेन पुनःशब्द
आनंतर्यार्थः पुनरनंतरं असौविद्येतिप्रसिद्धकन्या तस्मादेवमनसएवसका-
शात् जनिष्यते उत्पत्स्यते असौका ययातातः पितातेसहोदराः बंधवश्चजननी

माता सर्वकुलंकुलांतः पातित्वादात्मापिभक्षणीयइतिसर्वतयेवभक्ष्यं २० रतिः वदतीतिशेषः आर्यपुत्रपरित्राहिपरित्राहिइतिभर्तारमालिंगति कामः स्पर्शसुखमभिनीय प्राप्यस्वगतंमनस्येव स्फुरदिति अधीराक्ष्याः चपलाक्ष्याः परीरंभः आलिंगनंमोदंआनंदंजनयति उत्पादयति संमोहयतिच संमोहोविषयांतरविस्मरणंतत्करोतीत्यर्थः कीदृशः परीरंभः स्फुरन्रोमोद्भेदः रोमांचोद्गमोयेनसः पुनः कीदृशः भयेनउत्कटः कंपोययोस्तौचतावुत्तुंगौउच्चौस्तनौचतयोर्युगंयुग्मंतस्यभरस्तदासंगेनसंबंधविशेषेणसुभगोमनोहरः पुनः

रतिः सत्रासोत्कंपं अज्ज उत्त परित्ताहिपरित्ताहि इतिभर्तारमालिंगति कामः स्पर्शसुखमभिनीय स्वगतं स्फुरद्रोमोद्भेदस्तरलतरताराकुलदृशोभयोत्कंपोत्तुंगस्तनयुगभरासंगसुभगः अधीराक्ष्यागुंजन्मणिवलयदोर्वल्लिरचितः परीरंभोमोदंजनयतिचसंमोहयतिच २१ प्रकाशंदृढंपरिष्वज्यप्रियेनभेतव्यंनभेतव्यं अस्मासुजीवत्सु कुतोविद्योत्पत्तिः रतिः अधकिंताएररवसीए उप्पत्ती तुह्माणंपडिपक्खाणंसंम्मदा कामः बाढं सारवलुविवेकेनोपनिषद्देव्यांप्रबोधचंद्रेणभ्रात्रासमंजनयितव्यातत्रसर्वएतेशमदमादयः प्रतिपन्नोद्योगाः रतिः अज्ज उत्तकहं एदेहिं अप्पणोविनासकारिणीएविज्जाएउप्पत्तितेहिंदुव्विणीदेहिं

कीदृशः गुंजच्छब्दायमानंमणिवलयंयस्यांतादृशीदोर्वल्लिर्बाहुलता तयारचितः संपादितः कीदृश्याअधीराक्ष्याः तरलतरा अतिचपलातारा अक्ष्णः कनीनिकातयाआकुलाव्याकुलादृक्यस्याः २१ रतिः अथकिंतस्याराक्षस्याउत्पत्तिर्युष्माकंप्रतिपक्षाणांसंमता कामः बाढंअवश्यंसंमतेतिशेषः सारवल्विति सा विद्या अनाहतब्रह्माकारांतः करणवृत्त्युपहितंचैतन्यंप्रबोधचंद्रः रतिः आर्यपुत्रकथमेतैरात्मनोविनाशकारिण्याविद्यायाउत्पत्तिस्तैर्दुर्विनीतैः श्लाघ्यते विद्यायाउत्पत्तिः कथंश्लाघ्यतेइतिप्राकृतयोजना

सहजेति मलिनंदुष्टं अतएववक्रंभावंचित्ताभिप्रायंभजंतिसेवंतेयेतेषांभवउ त्पत्तिः प्रभवस्यउत्पत्तिस्थानस्य आत्मनश्चनाशहेतुःभवति उक्तेर्थेअर्थांतर न्यासः धूमोजलधरपदवीमवाप्य मेघमार्गपर्यंतंगत्वा स्वोत्पत्तिस्थानंवन्हिस्त न्नाशमनुनाशंप्रयाति धूमोपिमलिनोवक्रभावश्चेतिभावः २२ नेपथ्येजवनिका यां गुरोरिति अवलिप्तस्यसगर्वस्यउत्पथप्रतिपन्नस्यउन्मार्गगामिनः शेषंस्फु- गमं २३ गाथांपदसंदर्भरूपां अनेनेति जनकेनमनसा अहंकारानुवर्तिना अ-

सकलाहिज्जदिकामः प्रियेकुलक्षयप्रवृत्तानांपा पकारिणांकुतःप्रत्यवायगणनापश्य सहजमलिन वक्रभावभाजांभवतिभवःप्रभवात्मनाशहेतुः जल धरपदवीमवाप्यधूमोज्वलनविनाशमनुप्रयातिनाशं २२ नेपथ्ये आः पापदुरात्मन्कथमस्मानेवपापका रिणइत्याक्षिपसिननुरे गुरोरप्यवलिप्तस्यकार्याका र्यमजानतः उत्पथप्रतिपन्नस्यपरित्यागोविधीयते २३ इतिपौराणिकींगाथांपुराणविद उदाहरंति अने नचास्माकंजनकेनाहंकारानुवर्तिनाजगत्पतिःपिते वतावद्वद्धः मोहादिभिश्चसएवबंधोदृढतांनीतः का मःविलोक्यप्रियेअयमस्माकंकुलेज्यायान्देव्याम त्यासहविवेकइतएवाभिवर्तते यएष रागादिभिःस्व रसचारिभिरात्तकांतिनिर्भर्त्स्यमानइवमानधनःकृ शांगः मत्यानितांतकलुषीकृतयाशशांकःकांत्ये वसांद्रतुहिनांतरितोविभाति २४

हमाकाराध्यासयुक्तेनजगत्पतिःपितेवपरमेश्वरएव यएषःरागादिभिरिति यएषपूर्वोक्तोविवेकःमत्याबुध्याविभाति कथंभूतयामत्यारागादिभिर्नितांत मतिशयेनकलुषीकृतया कीदृशैःरागादिभिः स्वरसचारिभिः अविविच्य स्वेच्छाप्रवृत्तैः आदिशब्देनमोहादयः तैरात्ताकांतिर्यस्य उत्प्रेक्ष्यतेनिर्भर्त्स्य मानइव प्रतिक्रियमाणइव मानएवधनंयस्य कृशान्यंगानियस्य कयाकइव कांत्याशशांकइव कीदृशः शशांकः सांद्रेणनिबिडेनतुहिनेनहिमेन अंतरित

आच्छादितः २४ तन्नयुक्तमित्यनेनकामरत्योःनिष्प्रभावत्वंविवेकोदयमा त्रेणप्रदर्शितं विष्कंभकइति प्राक्तननटसंक्षेपः उत्कृष्टपात्रप्रवेशः राजा विवेकः आर्यपुत्रकिमात्मनोदोषंलोकोविजानाति असाविति तैः प्रसिद्धैर्म दादिभिरसौजगत्प्रभुः परमात्माचिरंचिरकालंदीनायादशाआनंदशून्यादशा तां आनीयतप्रापितः कीदृशैर्मदादिभिः अहंकारः परः प्रथमोयेषांतैः

तन्नयुक्तमिहास्माकमवस्थातुमितिनिष्क्रांतौ विष्कंभकः ततः प्रविशतिराजामतिश्च राजा विचिंत्य प्रियेश्रुतंत्वया

स्यदुर्विनीतस्यबटोर्मदविस्फूर्जितंवचः यदस्मानेव पापकारिणइत्याक्षिपति मतिः अज्जउत्त किमप्पा प्पणोदोसंलोओविअणादि राजा प्रियेपश्य असावहंकारपरैर्दुरात्मभिर्निबध्यतैःपाशशतैर्मदादिभिः चिरंचिदानंदमयोनिरंजनोजगत्प्रभुर्दीनदशामनीयत २५ तएतेपुण्यकारिणोवयंतन्मुक्त्यैप्रवृत्ताःपापकारिणइतिजितंदुरात्मभिः मतिः अज्जउत्तजदोसो सहजाणंदसुंदर सहाओनिच्चुज्जआसो विप्फुरंतसअलतिहुअणप्पआरोपरमेसरोस्सुणिअदि ता कधं एदेहिंदुव्विणीदेहिंबंधिअमहामोहसाअरेणिखित्तो

पुनः कीदृशैः दुरात्मभिर्दुष्टस्वभावैः किंकृत्वापाशशतैः पाशाः वासनाः संस्काराः तद्रूपैः निबध्यनियम्य कीदृशोजगत्प्रभुः चिदानंदमयः ज्ञानस्वरूपः पुनः कीदृशः निरंजनः निर्गतं अंजनं मोहावरणंयस्मात् २५ मतिः अज्जेति आर्यपुत्रयतोसौ सहजानंदसुंदरस्वभावो नित्यप्रकाशः स्फुरत्सकलत्रिभुवनप्रचारः परमेश्वरः श्रूयते तत्कथमेतैर्दुर्विनीतैर्बध्वाम-

हामोहसागरेनिक्षिप्तः राजा प्रिये सततेति पुमान् सहजं स्वाभाविकमपिधै र्यं त्यजति औपाधिकं त्यजतीत्यत्र किंचित्रं धैर्यत्यागेहेतुमाह स्त्रीभि- रिति स्त्रीभिः प्रतारितं वंचितं मानसं यस्यसः उच्चैरितिसर्वत्रसंबंधनीयं कीदृशोपि सततं निरंतरं धृतिः धैर्यं यस्यतादृशोपि शांतोपि जितेंद्रियोपि अवाप्तः महोदयऐश्वर्यं येनतादृशोपि अधिगतः ज्ञातः नयोनीतिर्येन तादृशो पिअंतः स्वस्थोपि अव्यग्रांतःकरणोपि उदीरितासमयोचिताबुद्धिर्यस्य तादृशोपि स्वस्मिन्नेवेदं सर्वमवलोक्यतामित्याह स्वमपीति यत् यस्माद्धे तोः मायासंगात् अविद्यासंबंधात् पुमान् परमात्मा स्वमात्मानमपि इह

राजा प्रिये सततधृतिरप्युच्चैः शांतोप्यवाप्तमहोद योप्यधिगतनयोप्यंतःस्वस्थोप्युदीरितधीरपि त्य जतिसहजं धैर्यंस्त्रीभिः प्रतारितमानसः स्वमपि यदयमायासंगात्पुमानिहविस्मृतः २६ मतिः अ ज्जउत्तण खलु अंधआरलेहा एसहस्सरस्सिणो तिरक्कारोजंमा आएतधाविप्फुरंतमहापआससा अरस्सदेवस्स अहिहवो राजा प्रिये अविचारसि द्धेयंवारविलासिनीव मायाअसतोपिभावानुपद र्शयंतीपरपुरुषंवंचयति पश्यपश्य स्फटिकम णिबद्धा स्वान्देवः प्रगाढमनार्ययाविकृतिमनया नीतः कामप्यसंगतविक्रियः

इदानीं विस्मृतः अपिस्तत्तदर्थव्यतिरेकसमुच्चयार्थः २६ अजानती मायाका र्यमिच्छति मतिरित्यादिना आर्यपुत्रनखलु अंधकारलेखया सहस्ररश्मे स्तिरस्कारः यन्मायया तथाविस्फुरन् महाप्रकाशसागरस्य देवस्याभिभवः मायाकार्यं प्रकटयति अविचारेति अविचारसिद्धा अनिर्वचनीयासत्वेन अ- सत्वेन वाविचारयितुमशक्यावारविलासिनीववेश्येव असतोभावान् अविद्यमा न कर्तृत्व भोक्तृत्वादीन् उपदर्शयंतीसतीवंचयति यदिनप्रत्ययसेतर्हिपश्ये त्याह पश्यपश्येति किंपश्येत्याह स्फटिकेति अनयामायया अनार्यया अ- श्रेष्ठया अनर्थकारिण्या भास्वान्स्वयंप्रकाशोदेवः परमात्मा प्रगाढमति

शयेनकामपि अनिर्वचनीयांविकृतिंविकारंनीतः प्रापितः तर्हिसाकृतार्थैव जातेत्याह तदुपश्लेषादिति तदुपश्लेषात्तत्संसर्गात् अस्यात्मनोमनागपि ईषदपिरुचिः स्वस्वरूपप्रकाशः नखलुअपैति गच्छति तत्रहेतुः असंगता असंभाविताविक्रियाविकारोयत्र तत्रदृष्टांतः स्फटिकमणिवत् यथास्फटिकः जपाकुसुमसन्निधानाद्रक्तोपिस्वाभाविकंश्वैत्यंनजहाति तथोपाधिसंन्निधानाद्विकृतोपिस्वरूपान्नहीयतइत्यर्थः यद्यप्येवंतथापिबाढम

नखलुतदुपश्लेषादस्यव्यपैतिरुचिर्मनाक्प्रभवति तथाप्येषाबाढंविधातुमधीरतां २७ मतिः किंपुण कारणंजेणसातधाउदारचरिदंदुविअग्घायओरदि राजा नखलुप्रयोजनंकारणंवाविलोक्यमायाप्रवर्तते स्वभावःखलुअयंस्त्रीपिशाचिनां पश्य संमोहयंतिरमयंतिविषादयंति निर्भर्त्सयंतिमदयंति विडंबयंति एताः प्रविश्यसदयंहृदयंनराणांकिंनामवामनयनानसमाचरंति २८ अस्तिचापरमपिकारणं मतिः अज्जउत्त तं किं राजा एवमनयादुराचारयाचिंतितं अहतावहृतयौवनावर्षीयसी अयंचपुराणः पुरुषः स्वभावादेवविषयरसविमुखः ततः स्वतनयमेवपारमेश्वरेपदे निवेशयामि नमेवचभ्रातुरभिप्रायमासाद्यनितांतप्रत्यासन्नतयातद्रूपमिवापन्नेनमनसानवद्वाराणिपुराणि निर्माय

निशायेनएषा माया अधीरतांविधातुंस्वरूपात्प्रच्यावयितुंप्रभवतिप्रवर्तते २७ मतिः किंपुनः कारणंयेनसातथाउदारचरितंदुर्विदग्धाप्रतारयति राजाप्रयोजनंकार्यं संमोहयंतीति वामनयनाः कपटदृष्टयः सदयंयथास्यात्तथानराणांहृदयंप्रविश्यकिन्नामनसमाचरंति विडंबयंति अनुकुर्वंतीत्यर्थः शेषंसुगमं २८ मतिः आर्यपुत्रतत्किंकारणं राजा एवमनयेति स्वतनयंमनोरूपंपारमेश्वरपदे आत्मत्वव्यवहारविषये स्थानेनिवेशयामि स्थापया-

मीत्यर्थः नितांतप्रत्यासन्नतया अभेदसंबंधेन नवद्वाराणिपुराणिशरीराणि एकइति तेषुशरीरेषुएकोपिएकएवपरमात्माविच्छिद्येवपृथक्कृत्वेव बहुधाअनेकप्रकारेणविनिवेशितइव प्रवेशितइव बिंबप्रतिबिंबन्यायेनप्रवेशइत्यर्थः अथोअनंतरंतस्मिन्स्वचेष्टितंकर्तृत्वभोक्तृत्वसुखित्वदुःखित्वादिधर्मौविदधाति प्रक्षिपति तत्रदृष्टांतः मणाविव यथाजपादिरुपाधिःस्वधर्मरक्तत्वादिं मणौप्रक्षिपतितद्वदित्यर्थः २९ मतिः आर्यपुत्र यादृशीमाता पुत्रोपि तादृशाएवजातः अवस्थांतरमप्याह ततोसाविति असौपरमात्मा अहंकारेणनप्त्रा चित्तस्यज्येष्ठपुत्रेणपरिष्वक्तः अहमितिव्यवहारविषयःकृतइतियोजना

एकोपिबहुधातेषुविच्छिद्येवनिवेशितः स्वचेष्टित
मथोतस्मिन्विदधातिमणाविव २९ मतिः चिंति
त्य अज्ज उत्त जादिसीमादापुत्तकोविताृदिसोजेव्व
जादो राजा ततोसावहंकारेणचित्तस्यज्येष्ठपुत्रेण
नप्त्रापरिष्वक्तः ततश्चासावीश्वरः जातोहंजन
कोममैषजननीक्षेत्रंकलत्रंकुलंपुत्रामित्रमरातयो
वसुबलंविद्यासुहृद्बांधवाः चित्तस्पंदितकल्पना
मनुपतन्विद्वानविद्यामयींनिद्रामेत्यविघूर्णितोबहु
विधान्स्वप्नानिमान्पश्यति ३० मतिः अज्जउत्तएव
वंदीहदीहतरणिद्दाविद्दाविअप्पबोहेपरमेसरेकधंप्प
बोधुप्पत्ती भविस्सदि राजासलज्जमधोमुखस्तिष्ठति म
तिः अज्जउत्तकिंतिगुरुअरलज्जाभरणमिदसे

ततश्चासावीश्वरइति अग्रिमश्लोकोपस्कारकं ततः किंस्यादतआह जातोहमिति विद्वानीश्वरः अविद्यामयीं अविद्याप्रधानांनिद्रांएत्यप्राप्य बहुविधाननेकाकारानिमान्स्वप्नान्पश्यति कीदृशोविद्वान् विघूर्णितः विस्मृतस्वरूपः पुनःकीदृशः चित्तस्यमनसःस्पंदितंचेष्टितंतस्यकल्पनांरचनांअनुपतन् अनुगच्छन्इमान्कानित्याह जातोहमिति जनकोममैषइतियोजना सुगममन्यत् ३० मतिः आर्यपुत्र एवंदीर्घदीर्घतरनिद्रा विद्रावितप्रबोधेपरमेश्वरे कथंप्रबोधोत्पत्तिर्भविष्यति मतिः आर्यपुत्रकिमितिगुरु

तरलज्जाभरनमितशेखरतूष्णींभूतोस्मि मतिः आर्यपुत्र अन्यास्ताः स्त्रि-यः याः स्वरसप्रवृत्तस्यधर्मार्थव्यापारप्रस्थितस्य वाभर्तुर्हृदयेप्सितंविघ्नंति मानिन्याइति यदिउपनिषद्भ्याः मयासहसंगमः स्यात्तदा प्रबोधोदयः प्राप्त इत्यन्वयः कीदृश्याउपनिषद्भ्याः मानिन्याः स्त्रीणामीर्ष्याकृतः कोपोमा नइत्यभिधीयतेइतिलक्षणात् ईर्ष्याकृतकोपवत्याः चिरंविप्रयोगोवियोग स्तेनजनितायाअसूयाईर्ष्यातयाआकुलायाव्याकुलायाः संगमेहेतुः शां-त्यादेरनुकूलनादितिहेत्वंतरमाह भवतीति भवतीविषयाननुपास्यमुहूर्तंतू-

अरोतुण्हिंभ्भूदोसि राजा प्रियेसेर्ष्यप्रायेणयो षितांभवतिहृदयंतेनसापराधमिवात्मानंशंके म तिः अज्जउत्त अण्णाताइच्छि आओजासरसप उत्तस्सधम्मात्थवापारपत्थिअस्सभत्तुणोहिअअ च्छिअंविहणंति राजा पूर्वकामेनोद्भासितंमतेःका लुष्यंत्वाजयति प्रिये मानिन्याश्चिरविप्रयोगज नितासूयाकुलायाभवेच्छांत्यादेरनुकूलनादुपनि षद्भ्यामयासंगमः तूष्णींचेद्विषयानपास्यभवती तिष्ठेन्मुहूर्तंततोजागृत्स्वप्नसुषुप्तिधामविरहात्प्राप्तः प्रबोधोदयः ३१ मतिः अज्जउत्तजइएव्वंकुलप्पहु णोदिदगंदिनिबन्द्धस्सविबंधमोरखोभोदिनदोता एणिच्चाणुबंधोजेव्व अज्जउत्तो भोदुत्तिसुङ्गुमेपिअं

ष्णींतिष्ठेच्चेत्तदाजाग्रत्स्वप्नसुषुप्तिधामविरहादिति धामशब्दोत्रस्थानवाचकः धामानित्रीणिभवंति स्थानानिजन्मानिनामानीतिनैरुक्तं तथाचायमभिप्रायः जाग्रदाद्यभिमानस्थानाभावाच्छांत्यादिमतोविचारप्रवृत्तस्य बुद्धेर्व्यासंगाभा वात्प्रबोधोत्पत्तिरिति ३१ मतिः आर्यपुत्र यदिएवंकुलप्रभोर्दृढग्रंथिनिबन्द्ध स्यापिबंधमोक्षः संसारान्निवृत्तिर्भवति तदातयानित्यानुबंधएव आर्यपुत्रो भवत्विति सुष्टुमेप्रियं आर्यपुत्रदृढग्रंथिरहंकारस्तन्निबन्द्धस्यतदभिमानिनो पि यदिबंधमोक्षः संसारनिवृत्तिस्तदातयाउपनिषद्भ्यानित्यानुबंधएव अ-हंकाराभिमान्येव नित्यसंगतिरेव भवत्विति प्राकृतान्वयः अहंकारस्यपरमते

नित्यत्वात्नाशाभावादितिभावः बध्वैकइति मयाअसावात्माब्रह्मैकतांचिदा नंदब्रह्मैक्यभावंनीयते किंकृत्वा तेषांपूर्वोक्तानांब्रह्माभिधांब्रह्मभेदकानांविद्य याब्रह्माद्वैतसाक्षात्कारेणप्राणांतिकंदेहांतंप्रायश्चित्तमिदंप्रसिद्धंविधायकृ- त्वा तेषामित्यत्रतेके येर्जगतामादिः प्रभुः स्वतंत्रः शाश्वतोऽविनाशीएवंभू-

राजा प्रिये यद्येवंप्रसन्नासिसिद्धास्तर्हिचिरम स्माकंमनोरथाः तथाहि बध्वैकोबहुधाविभज्य जगतामादिःप्रभुःशाश्वतःक्षिप्तायैःपुरुषःपरेषु परमंमृत्योःपदंप्रापितः तेषांब्रह्माभिदांविधायवि धिवत्प्राणांतिकंविद्ययाप्रायश्चित्तमिदंमयापुन रसौब्रह्मैकतांनीयते ॥३२॥ तद्भवतुप्रस्तुविधानाय उक्तार्थसिद्धयेप्रारब्धकरणीयंविशिष्टदेशकाल पात्रेषुवाराणसीप्रमुखदेशाःसंक्रांत्यादयःकालाः ब्राह्मणादयःपात्राणिप्रबोधोत्पत्तयेशमादमादीन् योजयामइतिनिष्क्रांतो इतिश्रीकृष्णमिश्रविर- चितेप्रबोधचंद्रोदयनाम्निनाटकेप्रथमोंकः १

तोपिपुरुषः परमेश्वरः पुरेषुनरकायादिषुएकएवबहुधाविभज्यबध्वाक्षि प्त्वाप्रवेश्यमृत्योःपदंजननमरणस्थानंप्रापितः ३२ प्रस्तुतविधानायपूर्वोक्ता र्थसिद्धयेप्रबोधोत्पत्तयेअद्वितीयात्मसाक्षात्कारोत्पत्तये इतिश्रीप्रबोध चंद्रोदयव्याख्यानेप्रकाशाख्ये प्रथमोंकः १

---

प्रथमेंके। ज्ञानकृतोनिखिलोपिभेदावभास आत्माद्वैतावभासान्निरस्यतइतिप्र तिपाद्य विवेकोद्योगमुपक्रम्य इदानींद्वितीयेंके महामोहोपितत्तद्धर्मानुष्ठानवैफ ल्याय दंभादीन्प्रेषयति तथोक्तं दंभंविनायः क्रियतेसधर्मइत्यादि ततः प्र विशतिदंभइत्यादिसामात्येन अमात्यामंत्रिणस्तत्सहितेन अवहितैः अवधान युक्तैः सावधानैरित्यर्थः प्रतिकर्तव्यः दूरीकर्तव्यः निःश्रेयसविघ्नार्थंमोक्षप्र तिबंधार्थंप्रयततां अतिशयितोयत्नः क्रियतां अल्पयत्नेननभवतीतिभावः

एवंविवेकोद्योगमुपक्रम्यमहामोहेनापिदेशकाल- पात्राण्यधिष्ठातुंतत्तद्धर्मानुष्ठानवैकल्यायदंभाद यःप्रेष्यंतेस्म ततःप्रविशतिदंभः दंभः आदिष्टो स्मिमहाराजमहामोहेन यथावत्सदंभप्रतिज्ञातं सामात्येनविवेकेनप्रबोधोदयायप्रेषिताश्चतेषुतेषु तीर्थेषुशमदमादयःसचायमस्माकमुपस्थितःकु- लक्षयोभवद्भिरवहितैःप्रतिकर्तव्यः तत्रपृथिव्यांप रममुक्तिक्षेत्रंवाराणसीनामनगरीतद्भवास्तत्रग- त्वाचतुर्णामप्याश्रमाणांनिःश्रेयसविघ्नार्थंप्रयतता मिति तदिदानींवशीकृतभूयिष्ठामयावाराणसी संपादितश्चस्वामिनोमयायथानिर्दिष्टआदेशः त थाहिमदधिष्ठितैरिदानीं वेश्यावेश्मसुशीधुगंधि ललनावक्त्रासवामोदितैर्नीलानिर्भरमन्मथोत्सव रसैरुन्निद्रचंद्राःक्षपाः सर्वज्ञाइतिदीक्षिताइतिचि रप्राप्ताग्निहोत्राइतिब्रह्मज्ञाइतितापसाइतिदिवाधू र्तैर्जगद्वंच्यते १

यथानिर्दिष्टः यथालब्धोक्तः आदेशःआज्ञा मदधिष्ठितैरिति मयादंभेन अधि ष्ठितैर्दांभिकैरित्यर्थः वेश्येति धूर्तैर्वंचकैर्दिवादिनएवजगत्नरनारीसमुदा- यात्मकंइतिअनेकप्रकारेणसर्वज्ञत्वादिव्यपदेशेनवंच्यतेप्रतार्यते किंकृत्वा वेश्यावेश्मसुवारविलासिनीमंदिरेषुक्षपाः रात्रीः नीत्वापरिकल्प्य कीदृश्यः क्षपाः उन्निद्रः प्रकाशयुक्तः प्रकटः चंद्रोयासुताः कीदृशैर्धूर्तैः शीधुमद्यंतद्गंधो

यत्रतादृशंललनावक्त्रंकामिनीमुखतत्रआसवोमादकद्रव्यविशेषः मदिरावा तयामोदितैः संतुष्टैः पुनः कीदृशैः निर्भरः अतिशायितोमन्मथोत्सवेमैथुनेरसः प्रीतिर्येषांतैः १ यथैषइति उत्तरान्वयि ज्वलन्निति पूर्वार्धस्थगमंवाग्जालैर्जगत्त्रयंभर्त्सयन्निवेत्यनुषंगः उपहसन्नुपहासंकुर्वन्निवेत्यत्रानुषंगोजगत्त्रयमित्यस्य २ वृत्तांतंसमाचारंअनुसरिष्यामिज्ञास्यामि नैवेति नृपशुभिः मनुष्यरूपैःपशुभिः गुरोःप्रभाकरस्यमतंनैवाश्राविनैव

विलोक्य कोप्ययंपांथोभागीरथीमुत्तीर्यसांप्रतमितएवाभिवर्तते यथैषः ज्वलन्निवाभिमानेनग्रसन्निवजगत्त्रयं भर्त्सयन्निववाग्जालैःप्रज्ञयोपहसन्निव २ तथातर्कयामि नूनमयंदक्षिणाराढाप्रदेशादागतोभविष्यतितदेतस्मादार्याहंकारस्यवृत्तांतमनुसरिष्यामीति ततःप्रविशतिअहंकारोयथानिर्दिष्टः अहंकारः अहोमूर्खबहुलंजगत् तथाहि नैवाश्राविगुरोर्मतंनविदितंतौतातितंदर्शनंतत्वंज्ञानमहोनशालिकगिरांवाचस्पतेःकाकथा सूक्तंनापिमहोदधेरधिगतंमाहाव्रतीनेक्षितासूक्ष्मावस्तुविचारणानृपशुभिःस्वस्थैःकथंस्थीयते ३

श्रुतंतौतातितंदर्शनंकौमारिलंशास्त्रंनविदितंनैवज्ञातमित्येवकारानुषंगः सर्वत्र अहोइत्याश्चर्येशालिकगिरांप्रभाकरमतावलंबिवाचांतत्वं अनारोपितरूपंस्वरूपंनैवज्ञातं वाचस्पतेःन्यायभाष्यव्याख्यातुर्वेदांतभाष्यव्याख्यातुश्चकाकथा नकापिवार्तेत्यर्थः महोदधेःसूक्तंशेषप्रणीतभाष्यस्य सूक्तंस्पष्टमपिनाधिगतंदुरुक्तंतुस्थतरांनमहाव्रतंपाशुपतव्रतंतत्संबंधिनीमाहाव्रतीपाशुपतशास्त्रसंहतिःनेक्षितानदृष्टा वस्तुविचार

णास्सूक्ष्मा वस्तु औपनिषदंब्रह्मतद्विचारणासूक्ष्मा दुर्विज्ञेयेत्यर्थः एवं सतिस्वस्थैः पंडितानामस्माकंनकिंचिद्विवेचनीयमस्तीतिस्वस्थचित्तैः क थंस्थीयतइत्यर्थः ३ विलोक्य शब्दवैदिकानितिशेषः अर्थावधारणवि धुराः अर्थनिश्चयरहिताः पुनरन्यतोगत्वाविलोक्येतिशेषः भिक्षामात्रे ति भिक्षामात्रार्थंगृहीतंयतिव्रतंयैस्ते भिक्षामात्रंप्रयोजनंनमुक्तिः गृहीत यतिव्रतानतुयतयइत्यर्थः मुंडितंमुंडंयैस्ते नतुमुंडितमनसइत्यर्थः आत्मा

विलोक्य एतेतावदर्थावधारणविधुराःस्वाध्याया ध्ययनमात्रनिरतावेदविप्लावकाएव पुनरन्यतोग त्वा एतेचभिक्षामात्रगृहीतयतिव्रताः मुंडितमुं डाः पंडितंमन्यावेदांतशास्त्रंव्याकुलयंति विहस्य प्रत्यक्षादिप्रमासिद्धविरुद्धार्थाभिधायिनः वेदां तायदिशास्त्राणिबौद्धैःकिमपराध्यते ४ तदेतै र्वाङ्मिश्रणमपि गुरुतरदुरितोदयाय पुनरन्य तोगत्वा एतेचशैवपाशुपतादयोदुरभ्यस्ताक्षपा दमताः पशवः पाखंडाएव अमीषांसंभाषणादपि नरानरकंप्रयांतितदेतेदर्शनपथाद्दूरंपरिहरणीयाः पुनरन्यतोगत्वा एतेच गंगातीरतरंगशीतलशि लाविन्यस्तभास्वद्बृसीसंविष्टाःकुशमुष्टिमंडितम हादंडाःकरंडोज्ज्वलाः पर्यायग्रथिताक्षसूत्रवल यप्रत्येकबीजग्रहव्यग्राग्रांगुलयोहरंतिधनिनांवि त्तान्यहोदांभिकाः ५

नंपंडितंमन्यंतेतेपंडितंमन्यानतुपंडिताइत्यर्थः प्रत्यक्षादीति प्रत्यक्षा- दिप्रमाणसिद्धयोर्यर्थस्तद्विरुद्धयोर्योर्थः स्वर्गादिरूपस्तमभिदधतीत्येवंशी लाः वेदांताः यदिशास्त्राणितर्हिबौद्धैः किमपराध्यतेनकिमपीत्यर्थः ४ तदेतैरिति वाङ्मिश्रणंवाचांमिश्रणं संभाषणमितियावत् दुरितोदया यपापोत्पत्तये दुःखेनाभ्यस्तंअक्षपादमतंकणादशास्त्रंयैस्ते गंगातीरे ति अहोइत्याश्चर्ये दांभिकाःदंभप्रधानाः धनिनांवित्तानिहरंति कीदृ

शाः दांभिकाः गंगातीरेतरंगैः शीतलाः याः शिलाः तास्ववन्यस्ताः प्रक्षिप्ताः याः भास्वद्बृस्यः ऋषीणामासनानितेषु संविष्टाः पुनः कीदृशाः कुशमुष्टिनामंडितः शोभितोमहादंडोद्दहद्भुजदंडोयेषांते पुनः कीदृशाः करंडैः धौतवसनस्थापनवंशपात्रैः उज्ज्वलाः शोभमानाः पुनः कीदृशाः पर्यायेणआदृत्याग्रथितंयदक्षसूत्रवलयंमणिमालारूपंतस्यप्रत्येकंबीजग्रहेमणिग्रहणेव्यग्राश्वंचला अग्रांगुलयोयेषांतेतथा ५ एतेचेति त्रिदंडिव्यपदेशेन त्रिदंडिछलेनजीविनो द्वैताद्वैतमार्गपरिभ्रष्टाः भट्टभास्करमतावलंबनादुभयभ्रष्टाइतिभावः अहंकारोविचारयति अयेकस्येदमिति अयेइति

पुनरन्यतोगत्वा एतेचत्रिदंडिव्यपदेशाजीविनो द्वैताद्वैतमार्गपरिभ्रष्टाः पुनरन्यतोगत्वा विलोक्य अयेकस्येदंद्वारोपांतनिरवातातिप्रांशुवंशकांडतांडवितधौतसितसूक्ष्मांबरसहस्रमितस्ततोविन्यस्तकृष्णाजिनदृषदुपलचमसचषालोलूखलमुसलमनवरतहुताज्यगंधिधूमश्यामलीकृतगगनमंडलममरसरितोनातिदूरतोविभात्याश्रमपदं नूनमदः कस्यापिगृहमेधिनोगृहं भविष्यति भवतु युक्तमस्माकमतिपवित्रमेतद्धि त्रिदिवसनिवासायस्थानं इतिप्रवेशंनाटयति विलोक्य अये मृद्बिंदुलांछितललाटभुजोदरोरः कंठोष्ठपृष्ठचिबुकोरुकपोलजानुः

संबोधनं अहोइत्यर्थेइदंपरिदृश्यमानंअमरसरितोदेवनद्यागंगायानातिदूरतः निकटएवकस्याश्रमपदंविभाति शोभते कीदृशंआश्रमपदंद्वारोपांतेद्वारनिकटभूमौनिखातमारोपितं अतिप्रांशु अत्युच्चंयद्वंशकांडंतस्मिंस्तांडवितंनृत्यत्धौतंप्रक्षालितंसितंश्वेतंसूक्ष्मंचबहुमूल्यंअंबरंसहस्रंयस्मिंतत् पुनः इतस्ततोविन्यस्तानिस्थापितानिकृष्णाजिनमारभ्य मुसलांतानियज्ञपात्राणियस्मिन्तत् पुनःअनवरतंनिरंतरं हुतस्याज्यस्यगंधोयस्मिन्नेतादृशोयोधूमः तेनश्यामलीकृतंश्यामीकृतंगगनमंडलंयस्मिन् नूनमिति अदः इदंगृहमेधिनोगृहस्थस्य दंभमजानन्नाह मृद्बिंदुरिति एषो-

दंभः मूर्तइव मूर्तिमानिवस्फुरतिममप्रतिभाति कीदृशः मृद्बिंदुभिर्मृन्मि र्मितवर्तुलतिलकैः लांछितानिचिन्हानिललाटादीनिजान्वंतानियस्यसः पुनः चूडाग्रंशिखाग्रंकर्णकटिपाणिषुविराजमानादर्भांकुरायस्यसः यू

चूडाग्रकर्णकटिपाणिविराजमानदर्भांकुरःस्फुरति मूर्तइवैषदंभः ६ भवतुउपसर्पाम्येनं उपसृत्यक ल्याणंभवतां दंभःहुंकारेणैवतंवारयति प्रविश्य बटुः ससंभ्रमं ब्रह्मन्दूरतएवस्थीयतां यतः पा

दौपक्षाल्य एतदाश्रमपदंप्रवेष्टव्यं अहंकारः स क्रोधं आःपापतुरुष्कदेशाग्रामाः स्म यत्रश्रोत्रि यानतिथीनासनपाद्यादिभिरपिगृहिणोनोपति ष्ठंति दंभःहस्तसंज्ञयासमाश्वासयति बटुः एव माराध्यपादाआज्ञापयंति दूरदेशादागतस्यार्यस्य कुलशीलादिकंनसम्यगस्माकंविदितं अहंकारः आःकथमस्माकमपिकुलशीलादिकमिदानींपरी क्षितव्यं श्रूयतां

पाग्रेनिक्षिप्तकाष्ठकंटकः ६ भवतुउपसर्पाम्येनमित्यारभ्ययत्रश्रोत्रियानित्यं तंस्फगमं सत्रेति अतिथीननागतपूर्वान् तत्रापिश्रोत्रियान्गृहिणोगृहस्थाः नोपतिष्ठंति नसंमुखमायांति बटुर्दंभशिष्यः वदतीतिशेषः

गौडमिति गौडंराष्ट्रंदेशअनुत्तमंनविद्यतेउत्तमंयस्मात्तदनुत्तमं तत्रापिरा टानगरीनिरुपमा तत्रराटापुर्यांभूरिश्रेष्ठिकंइतिनामयस्यतस्यपरमंधामउत्कृ ष्टंगृहमस्तीतिशेषः तस्मिन्नोस्माकंपिताउत्तमः उत्कृष्टः उत्तमनामकोवाऽस्ती तिशेषः तत्पुत्रामहाकुलाश्चात्रजगतिकस्यनविदिताः अपितुसर्वस्येवविदि·

गौडंराष्ट्रमनुत्तमंनिरुपमातत्रापिराटापुरीभूरिश्रे ष्ठिकनामधामपरमंतत्रोत्तमोनःपिता तत्पुत्राश्च महाकुलानविदिताःकस्यात्रतेषामपिप्रज्ञाशील विवेकधैर्यविनयाचारैरहंचोत्तमः ७ दंभः बटुंप श्यति बटुः ताम्रघटींगृहीत्वाभगवन्पादशौचंवि धीयतां अहंकारः स्वगतं भवतुकोविरोधएवंक्रि यते तथाकृत्वोपसर्पति दंभः दंतान्पीडयित्वादू रेतावत्स्थीयतांवाताहताःप्रस्वेदकणिकाःप्रसरं ति अहंकारः अहोअपूर्वमिदंब्राह्मण्यं बटुः ब्रह्म

न्नेवमेतत् तथाहि अस्पृष्टचरणात्यस्यचूडामणिम रीचिभिः नीराजयंतिभूपालाःपादपीठांतभूतलं ८

ताइत्यर्थः तेषांपुत्राणामपिमध्ये अहंप्रज्ञाबुद्धिः शीलंस्वभावः विवेकःपांडि त्यं धैर्यंधीरता विनयोनम्रता आचारश्च एतैर्गुणैरुत्तमः सर्वोत्कृष्टइत्यर्थः ७ दंभइत्यारभ्यतथाहीत्यंतंनिगदव्याख्यानं अहोइत्युपहासोक्तिः अपूर्वमिदं ब्राह्मण्यं अस्पृष्टेति हिनिश्चितंभूपालाः राजानः अस्यदंभस्य पादपीठस्य अंते अवसानेनिकटेभूतलंचूडामणिमरीचिभिः मुकुटमाणिक्यरश्मिभिः

नीराजयंति आर्तिकिक्रियया उपचरंति कीदृशाः भूमिपालाः अस्पृष्टच-रणाः नस्पृष्टौचरणौयैस्तेचरणस्पर्शरहिताइत्यर्थः एतेनराजपूजानिबं धनमेवब्राह्मण्यंनविद्यातपोव्रतेदौर्भिकानामितिभावः ८ अहंकारइत्या रभ्यशृणुरेमूर्खइत्यंतंसंबोधनं रू बोधमध्येपरेषामासनोपवेशेन अहंका रोऽत्यनाचारीतिनैवमाराध्यपादानामित्यनेनध्वनितं नास्माकमिति अ अस्माकंजननीमाता तथाउज्वलकुला उत्कृष्टकुलान मयापुनः समी चीनश्रोत्रियाणांकन्याव्यूढापरिणीता तेन कारणेन अहंतातोधिकः पित्राधि

अहंकारः स्वगतं अयेदंभग्राह्योयंदेशः भवत्व स्मिन्नासनेउपविशामि तथाकर्तुमिच्छति बटुः नैवमाराध्यपादानामासनमन्यैराक्रम्यते अहं कारः आःपापअस्माभिरपिदक्षिणराढाप्रसिद्ध शुद्धिभिरिदमासनमनाक्रमणीयं शृणुरेमूर्ख नास्माकंजननीतथोज्वलकुलासच्छ्रोत्रियाणांपु नर्व्यूढाकाचनकन्यकाखलुमयातेनास्मितातोधि कः अस्मच्छालकमित्रमातुलस्य तामिथ्याभिश प्तायतस्तत्संपर्कवशान्मयास्वगृहिणीप्रेयस्यपिप्रो ज्झिता ९ दंभः ब्रह्मन्यद्यप्येवंतथाप्यस्मात्कमवि दितवृत्तांतोभवान् तथाहि सदनमुपगतोहंपूर्व मंभोजयोनेः सपदिमुनिभिरुच्चैरासनेषूज्झितेषु सशपथमनुनीयब्रह्मणागोमयांभः परिमृजितनि जोरावाशुसंवेशितोस्मि १० अहंकारः स्वगतं

कः उत्तमैरुत्तमैर्नित्यंसंबंधानाचरेद्बुधइतिस्मरणात् संबंधकृतमुत्तमत्वं आचारातिशयंदर्शयति अस्माकंशालकः अस्मच्छालकः तस्यमित्रंतस्य मातुलः मातुर्भ्रातातस्यसुताकन्यासायतोहेतोः मिथ्याभिशप्तामिथ्याभि शापयुक्तातत्संपर्कवशात्परंपरासंबाधान्मयाप्रेयस्यपिप्रेमास्पदाअपिस्वगृ हिणीप्रोज्झितात्यक्ता ९ सदनमिति अहंपूर्वमंभोजयोनेर्हिरण्यग र्भस्यसदनंगृहंप्रतिउपगतः ब्रह्मणाहिरण्यगर्भेणगोमयांभः परिमृजित

निजोरो गोमययुक्तेनाभसाजलेनपरिसमंतात्मृजितः शोधितः स्त्रीयऊ
रुः अंकः तस्मिन्सशापयंयथास्यात्तथा अनुनीयमानयित्वाऽउपवेशितः के
षुसत्सु उच्चैरतिशयेनमुनिभिः सपदितत्क्षणेएव आसनेषुउज्झितेषुत्यक्ते
षुसत्सु एतेनहिरण्यगर्भस्यापिवयंमान्याः किंपुनर्मानुषाणामितिव्यज्यते
१० मत्तपोविजृंभितमदमित्याहाहंकारः अरेकइति अरेइतिनीचसंबोधने
वासवः शतक्रतुः कइवनकोपीत्यर्थः अहल्यागामित्वादितिध्वनितं अत्र

अहोदांभिकब्राह्मणस्यात्युक्तिः विचिंत्य अथवा
दंभस्यैव भवत्वेवंतावत् सक्रोधं प्रकाशं आः कि
मेवंगर्वायसे अरेकइववासवः कथयकोत्रपद्मोद्भ
वोवदप्रभवभूमयोजगतिकाऋषीणामपि अवे
हितपसोबलंममपुरंदराणांशतंशतंचपरमेष्ठिनांप
ततुवामुनीनांशतं ११ दंभः विलोक्य सानंदं अये
आर्यः पितामहोयस्माकमहंकारः आर्यदंभोलो
भात्मजोहं भोः अभिवादये अहंकारः वत्सआयु

ष्मान्भव बालः खल्वसिमयाद्वापरांतेदृष्टः संप्रति

जगतिपद्मोद्भवोब्रह्माकइतिकथय स्वकन्यागामित्वादितितात्पर्यं जगतिऋ
षीणामपिमंत्रद्रष्टृणामपिप्रभवभूमयः उत्पत्तिभूमयः काः कथय धीवरक
न्यातोव्यासः कुंभसंभवोऽगस्त्यः हरिण्याः ऋष्यशृंगीएवमादीन्युत्पत्तिस्थाना
नीतिध्वनितं ईदृशंममतपसः सामर्थ्यमस्तीत्याह अवेहीति ममतपसोबलंअ
वेहि जानीहि किंतत्तदाह पुरंदराणांइंद्राणांपरमेष्ठिनांब्रह्मणांमुनीनांमनन-
शीलानांमत्येकंशतंपततु मत्तपः सामर्थ्यात् सर्वं आहंकारिकमितिभावः ११
अहंकारइति वदतीतिशेषः चिरकालविप्रकर्षाद्बहुकालविलंबात्नसम्यक्

प्रत्यभिजानामि नपरिचिनोमि अथेत्यादिः प्रसादः कृतइत्यंतोग्रंथः स्पष्टार्थः वत्समयेति अत्याहितं अत्यनिष्टं अति आसमंतात् अहितं अत्याहितमित्यर्थः तद्वृत्तांतंमहामोहसमाचारंप्रत्येतुंज्ञातुं स्वागतमेवस्कृष्टंवआगतं राजधानी राजानोधीयंतेवसत्यस्यामितिराजधानीराजवसतिः ममापिसैववसतिः निरूपिता विचारिता तत्रैवावस्थातव्यमितिभावः विवेकस्यउपरोधः प्रविघातः विवेकोपरोधस्त्वावश्यकोयतस्तस्यांनिरंतरंनिवासमिच्छतिवाराणस्यामित्याह तथा-

चिरकालविप्रकर्षाद्वार्धक्यग्रस्ततयाचनसम्यक्प्रत्यभिजानामि अथवत्सकुमारस्यानृतस्यकुशलं दंभः अथकिं सोप्यत्रैवमहामोहस्याज्ञयावर्तते नहितेन विनामुहूर्तमप्यहंजीवामि अहंकारः अथतवमाता पितरौतृष्णालोभावपिकुशलौ दंभः तावप्यत्रैववर्तेते तयोर्विनाक्षणमपिनतिष्ठामि आर्यमिश्रैः पुनरत्रकेनप्रयोजनेनप्रसादःकृतः अहंकारः वत्स मयामहामोहस्यविवेकसकाशादत्याहितंश्रुतंतेन तद्वृत्तांतंप्रत्येतुमागतोस्मि दंभः तर्हिस्वागतमेवार्यस्ययतोमहाराजस्यापिइंद्रलोकादागमनंश्रूयते अस्तिचकिंवदंतीयद्देवेनवाराणसी नामनगरी राजधानीनिरूपितेति अहंकारः किंपुनःकारणंवाराणस्यांसर्वात्मनामहामोहस्यावस्थाने दंभः आर्यननुविवेकोपरोधएव तथाहि विद्याप्रबोधोदयजन्मभूमिर्वाराणसीब्रह्मपुरी दुरत्यया अतःकुलोच्छेदविधिंविधित्सुर्निवस्तुमत्रेच्छतिनित्यमेवसः १२

हीति वाराणसीवासयोग्योविवेकएवेत्याह विद्येति सः विवेकः अतोहेतोः अत्र वाराणस्यांनित्यमेवसर्वदेवनिवस्तुंनितरांवासंकर्तुंइच्छति कीदृशोविवेकः कुलोच्छेदविधिंकुलोच्छेदकर्तव्यतांविधित्सुः चिकीर्षुः अतः कुतः यतः दुरत्यया अविनाशाब्रह्मपुरीशिवनगरीब्रह्मशब्दः शिववचनः उक्तंच ब्रह्मज्ञानंप्रधानंच क्षेत्रज्ञोकारबुद्धयः मोक्षोहिरण्यगर्भश्चमंत्रोवेदः शिवस्तथेति कीदृशीवारा

णसी विद्याप्रबोधोदयजन्मभूमिः विद्याच प्रबोधश्चतयोरुदयः तस्यजन्मभूमिः विद्याब्रह्माकारांतःकरणवृत्तिस्तदृत्त्युपहितंचैतन्यंप्रबोधः तयोर्जन्मभूमिरित्यर्थः १२ यद्येवमिति यदिएवंएवंविधा वाराणसीतिशेषः तर्हिअयमर्थोऽशक्यप्रतीकार इतियोजना अशक्यप्रतीकारत्वेकारणमाह यतःपरममिति इहवाराणस्यांपुरविजयी श्रीमहादेवः भगवान्षड्गुणैकसंपन्नः नराणांजीवानां अंतकालेप्राणोत्क्रमणसमये भवः संसारस्तस्माद्भयंतेनकातराः भीताः तान्तारयतीतितारकः तं प्रबोधंब्रह्मैकत्वलक्षणं कथयति प्रकाशयति कथंभूतानांनराणांपरमंपदंध्येयस्थानंअविदुषां यद्वापरमंब्रह्म पद्यतेप्राप्यते तत्पदंब्रह्मप्राप्तिस्थानं अविदुषां

अहंकारः सभयं यद्यप्येवमशक्यप्रतीकारएवायमर्थः यतः परममविदुषांपदंनराणांपुरविजयीकरुणाविधेयचेताः कथयतिभगवानिहांतकालेभवभयकातरतारकप्रबोधं १३ दंभः सत्यमेतत्तथापिनैतत्कामक्रोधाद्यभिभूतानांसंभाव्यते तथाह्युदाहरंति तैर्थिकाः यस्यहस्तौचपादौचपादौचमनश्चैवसुसंयतं विद्यातपश्चकीर्तिश्चसतीर्थफलमश्नुते १४ नेपथ्ये भोभोजनाएषखलुसंप्राप्तोदेवोमहामोहः तेननिष्यंदैश्चंदनानांस्फटिकमणिशिलावेदिकाःसंस्क्रियंतांमोच्यंतांयंत्रमार्गाःप्रसरतुपरितोवारिधारागृहेषु

अजानतां कीदृशोमहादेवः करुणयाविधेयंप्रवर्तनीयंचेतोयस्यसः १३ सत्यमेतदिति यद्यपि शंकरः सच्चिदानंदवाक्यार्थरूपंब्रह्मवाराणस्यां प्रकाशयतीतिसत्यं तथापीत्यग्रतनेनयोजनीयं तैर्थिकाःवैदिकाः किमुदाहरंतितदाह यस्येति यस्य हस्तौपादौसुसंयतौपारमेश्वरमेवकार्यंकुर्वाणौ नतुब्राह्मणताडनादि मनश्चसुसंयतमेवकामनासक्तमेव विद्यातत्तीर्थमाहात्म्यज्ञानं तपश्चांद्रायणादि कीर्तिर्दानादिना एवंयःकरोति सतीर्थफलमश्नुते प्राप्नोति १४ राज्ञामागमनेयानि अपेक्षितानिलोकेतान्याह निष्यंदैरिति चंदनानांनिष्यंदैः सेकैः स्फटिकाश्चमणयश्चतएव शिलायास्तत्ताद्दृश्योवेदिकाः स्फटिकरत्ननिर्मितानि चत्वराणि संस्क्रियंतां परिष्क्रियंतां यंत्रमार्गाः जलयंत्रद्वाराणि क्रीडार्थमापणेषुरचितानिमोच्यंतां उद्घाट्यंतां

अनेन आपण शृंगारोध्वन्यते वारिधाराजलधारा गृहेषुपरितः इतस्ततः प्रसरंतु नगरालंकारः अनेनसूचितः स्फुरंतोदीप्तिमंतः उरवः स्थूलाः मणयोयासुताः तादृश्यस्तोरणानांश्रेणयः पंक्तयः समंताच्चतुर्दिक्षु उच्छ्रीयंतां उच्चैर्बध्यंतां अनेन राजगृहाणामलंकरणंसूचितं सौधमूर्धसु प्रासादमस्तकेषु अमराणांदेवानांपति रिंद्रस्तस्यधनुषो धामस्वरूपं तद्विचित्राः नानारूपाः पताकाः धूयंतां कंप्यंतां अनेन नगरद्वारपरिष्कारोध्वनितः इदंसर्वंमहामोहप्रवृत्तिजनकमितिसूचितं प्रत्यासन्नः

उच्छ्रीयंतांसमंतात्स्फुरदुरुमणयःश्रेणयस्तोरणा
नांधूयंतांसौधमूर्धस्वमरपतिधनुर्धामचित्राःपताकाः
१५ दंभः आर्यप्रत्यासन्नोमहाराजः तत्प्रत्युद्गम
नेनसंभाव्यतामार्येण अहंकारः एवंभवत्विति नि-
ष्क्रांतोप्रवेशकः ततःप्रविशतिमहामोहः विभवत

श्चपरिवारः महामोहः विहस्य अहोनिरंकुशाज
डधियः तथाहि आत्मास्तिदेहाद्व्यतिरिक्तमूर्ति-
र्भोक्तासलोकांतरितःफलानां आशेयमाकाश
तरोःप्रसूनात्प्रथीयसीस्वादुफलप्रसूतौ १६

अतिसमीपमागतः १५ तत्प्रत्युद्गमनेनेति यस्मात्कारणादतिनिकटवर्तीतत् तस्मात्कारणात्प्रत्युद्गमनेन संमुखगमनेनेत्यर्थः ततइति विभवेनइति विभवतःस्वसामर्थ्येन महामोहः प्रविशतिइत्यन्वयः चकारोभिन्नक्रमः परिवारश्च सेवकवर्गश्च प्रविशतीत्यस्यानुषंगः निरंकुशाः जडधियः निर्मर्यादा मूढाः निरंकुशत्वंप्रकटयति लोकायतिकमतेन आत्मेति देहाद्व्यतिरिक्तमूर्तिरात्मास्तिसआत्मा लोकांतरितः स्वर्गलोकंगतः फलानांस्वर्गादीनां भोक्तेति यत् इयं आकाशतरोः प्रसूना

दाकाशवृक्षपुष्पात्स्वादुफलस्यमधुरफलस्य प्रसूतौ उत्पत्तौ प्रथीयसी महतीआ शेत्यर्थः १६ उक्तेर्थेउपपत्तिमाह इदंचेति स्वकल्पनया नतुपरमार्थविचारण येत्यर्थः अवष्टंभेन अंगीकारेण दुर्विदग्धैर्दुर्बुद्धिभिः यन्नेति बहुभिर्वाचालैः कोलाहलरसिकैः आस्तिकैर्वैदिकैः नास्तिकावेदबाह्याः सत्यवचसएव निंद्याः कृताः कीदृशैरास्तिकैः यद्दृष्टशरीराद्भिन्नमात्मस्वरूपंतन्नास्त्येवप्रत्यक्षेणानु पलंभात्तद्दृष्ट अस्ति इतिमृषाजल्पद्भिः येवयंसत्यप्रमाणवादिनस्तेनास्तिकाः कृताः स्वयमप्रमाणंवदंतः कथमास्तिकाइतिनविद्मइतितात्पर्यं युक्तिंस्वमतेदर्श यति हंहोइत्याश्चर्ये ऽव्ययं छिन्नाच्छेदितात् अतोऽस्माद्वर्ष्मणः शरीरात्पृथक्

इदंचस्वकपोलकल्पनाविनिर्मितपदार्थावष्टंभेनज गदेतैर्दुर्विदग्धैर्वच्यते तथाहि यन्नास्त्येवतदस्तिव स्त्विति मृषाजल्पद्भिरेवास्तिकैर्वाचालैर्बहुभिस्तत्स त्यवचसो निंद्याःकृतानास्तिकाः हंहोपश्यततत्वतो यदिपुनश्छिन्नादतोवर्ष्मणोदृष्टः किंपरिणामरूपि तचितिर्जीवः पृथक्कैरपि १७ अपिच नकेवलंजगदा त्मैवतावदमीभिर्वंच्यते तथाहि तुल्यत्वेवपुषांमुखा द्यवयवैर्वर्णक्रमः कीदृशः स्त्रीचेयंवस्वपरस्ययदमुं भेदंनविद्मोवयं हिंसायामथवायथेष्टगमनेस्त्रीणां परस्वग्रहेकार्याकार्यकथास्तथापियदमीनिष्ठोरुषाः कुर्वते १८

भिन्नोजीवः कैरपिदृष्टोयदि तर्हि पुनः वारं वारंतत्वतः सम्यक्तयापश्यत विचारयत अचेतनक्षोण्यारब्धे तत्कथंचैतन्यंतत्राह परिणामेनरूपांतरापत्यारूपिता उत्पा दिताचितिः चैतन्यंयस्यसः क्रमुकादीनांमीलितानांरागजनकत्ववत् मीलितानां भूतानांचैतन्योत्पादकत्वमितिभावः १७ नकेवलमिति एवशब्दोप्यर्थः अमीभि रास्तिकैर्नकेवलंस्वात्मावंच्यते अपितुजगदपीत्यर्थः तुल्यत्वेवपुषामिति मुखा द्यवयवैर्हस्तपादाद्यवयवैर्वपुषांतुल्यत्वेपि शरीराणांसाम्येपिवर्णक्रमः ब्राह्मणक्ष त्रियवैश्यशूद्रावर्णाः तेषांक्रमः धर्मनिरूपणरूपः कीदृशः नयुक्तिसहइत्यर्थः किं च इयंस्त्रीवस्वच इयंपरस्यस्त्रीपरस्यवाधनं यद्यस्माद्धेतोरयंभेदस्तं अमुंभेदंवयं

नविद्मः नजानीमः आस्तिककल्पितभेदव्यवहारोनर्थकइत्याह हिंसायांवैदिक हिंसायां अथवा अथचस्त्रीणांयथेष्टगमने यथेच्छंस्वपरस्त्रीणांपर्वकालादावपि स्मरताभ्यासे परस्वग्रहे परधनग्रहणेकार्याकार्यकथाः कर्तव्याकर्तव्यविचाराः यद्यपिवपुषांसाम्यंस्त्रीपुंभिदानतथापिनिर्घोक्षाः पुरुषार्थहीनाः कुर्वते अर्थकामावेवपरमपुरुषार्थौनिधर्मोनापिमोक्षस्तत्रमानाभावादितिभावः १८ सश्लाघ्यंसगर्वं लोकायतमेवशास्त्रं चार्वाकिशास्त्रमेवेत्यर्थः तत्वानिसपरमार्थानि भूतान्ये

विचिंत्य सश्लाघ्यं सर्वथालोकायतमेवशास्त्रं यत्र प्रत्यक्षमेवप्रमाणं पृथिव्यप्तेजोवायवस्तत्वानि अर्थकामौपुरुषार्थौ भूतान्येवचेतयंते नास्तिपरलोकः मृत्युरेवापवर्गइति-तदेतदस्मदभिप्रायानुरोधिनावाचस्पतिनाप्रणीय चार्वाकायसमर्पितमासीत् तेनचशिष्योपशिष्यद्वारेणास्मिल्लोकेबहुलीकृतं

तंत्रं ततःप्रविशतिचार्वाकःशिष्यश्च चार्वाकः वत्सजानासि दंडनीतिरेवविद्यात्रैववार्तांतर्भवति धूर्तप्रलापस्त्रयी पश्य स्वर्गःकर्तृक्रियाद्रव्यविनाशे यदियज्वनां ततोदावाग्निदग्धानांफलंस्याद्भूरिभूरुहाम् १९

वशरीराकारपरिणतानिचेतयंते ज्ञानजनकानि परलोकःस्वर्गादिः अपवर्गोमोक्षः अस्मदभिप्रायानुरोधिना अस्मदीयतात्पर्यानुसारेण दंडनीतिः राजनीतिः अत्रैवराजनीत्यामेववार्तांतर्भवति राजसेवाप्रतिपादिकानीतिरंतर्भवति त्रयीवेदत्रयी धूर्तप्रलापः वंचकानर्थकवचनं वेदवचसामप्रामाण्येनधूर्तप्रलपितत्वंसमर्थयति स्वर्गइति कर्तारश्चऋत्विजः क्रियाश्चहोमादिरूपाः द्रव्यंचपुरोडाशादि एतद्विनाशेयज्वनांयजमानानांयदिस्वर्गः ततः तर्हिदावाग्निदग्धानांभूरुहांवृक्षाणां

फलंभूरिबहुस्यात् अकारणात्कार्योत्पत्तेरुभयत्रापितुल्यत्वादितिभावः १९ तत्रै वयुक्त्यंतरमाह मृतानामिति निर्वाणस्यविनष्टस्यस्नेहः तैलादिः अतिरोहितार्थ मन्यत् २०२१ शिष्यइत्यादिप्राकृतं आचार्ययदिएषएवपरमार्थः पुरुषस्ययत्त्वा यत्तेपीयतेतत्किमित्येतैस्तैर्थिकैः संसारसुखंपरिहृत्य आत्माघोरघोरतरैः पराकसां तपनषष्ठकालप्रभृतिभिर्दुःखैः खेद्यते धूर्तेति वंचकप्रणीतशास्त्रप्रतारितानां- आशामोदकैर्मनसिपरिश्रुतमोदकैरित्यर्थः कालिंगनमिति आयताक्ष्याविस्तृत

अपिच निहतस्यपशोर्यज्ञेस्वर्गप्राप्तिर्यदीष्यते स्व पितायजमानेनकिन्नतस्मान्निहन्यते २० मृतानाम पिजंतूनांश्राद्धंचेत्तृप्तिकारणं निर्वाणस्यप्रदीपस्य स्नेहःसंवर्धयेच्छिखां २१ शिष्यः आचालिअ ज इ एसोजेव्वपरुमत्थोपुलिसस्स जं खज्जए पिज्ज ए ता किंति एदेहिं तित्थिएहिं संसालसोक्खंपलिहलि अआप्पा घोलघोलदलेहिं पालाअसांत अंनस द्व आलपहुदिहिं दुरखेहिंखविज्जदि चार्वाकः धूर्तप्रणीतागमप्रतारितानामाशामोदकै रियंतृप्ति मूर्खाणां पश्य कालिंगनं भुजनिपीडितबाहुमू लभग्नोन्नतिस्तनमनोहरमायताक्ष्याः भिक्षोप- वासनियमार्कमरीचिदाहैर्देहोपशोषणविधिः कुधि यांक्वचैषः २२ शिष्यः आचालिअ एवं खु तित्थि आ आलवंदि जंदुःखमिस्सिदं संसालसुखंपलि हलणीअंत्ति चार्वाकः विहस्य

लोचनायाः आलिंगनं क आलिंगनजन्यंसुखंक्क कुधियांपरलोकसुखेप्सू- नामेषः सकललोकप्रसिद्धः देहोपशोषणविधिः शरीरशोषणकर्तव्यताक परलोके प्रमाणाभावादितिभावः कीदृशमालिंगनं भुजाभ्यांनिपीडितंयद्बा ह्वोर्मूलंतेनभग्नाउन्नतिर्ययोस्तौचतौस्तनौचताभ्यांमनोहरंदेहशोषणविधिः कैःसाधनैः भिक्षाचउपवासएकादश्यादिश्चनियमश्चांद्रायणादिश्चअर्कम- रीचिभिः सूर्यकिरणैः सूर्यसंमुखावलोकनेनतत्किरणैर्योदाहः संतापएता

न्येवसाधनानितैरित्यर्थः २२ शिष्य आचार्यएवं खलुतेर्थिका आलपंति यद्दुःख मिश्रितंसंसारसुखंपरिहरणीयमिति त्याज्यंसुखमिति दुःखेनउपसृष्टंमिश्रितंदुःखसंवलितंविषयसंगमात् वनितादिसंबंधात् जन्मयस्यतादृशंसुखंत्याज्यंइत्येषापुंसांमूर्खविचारणा मूर्खविचारणमेवदृष्टांतेनप्रकटयति भोशिष्यकःपुमान् हितार्थीहितंइष्टंअर्थःप्रयोजनमस्यास्तीतिहितार्थी सिताः श्वेताः अतएवउत्तमाः तंडुलाः तैः आढ्यान्पूर्णान्व्रीहीन् शालीन् तुषकणोपहितान् तुषकणयुक्तान्ना

आः दुर्बुद्धिविलसितंनरपशूनां त्याज्यंसुखंविषय संगमजन्मपुंसांदुःखोपसृष्टमितिमूर्खविचारणेषा व्रीहीन्जिहासतिसितोत्तमतंडुलाढ्यान्कोनामभो स्तुषकणोपहितान्हितार्थी २३ महामोहः अयेचि रेणखलुप्रमाणवंतिवच नानिकर्णसुखमुपजनयं ति विलोक्य सानंदं हंत प्रियसुहृन्मेचार्वाकः चार्वाकः विलोक्य एष महाराजामहामोहः उप सृत्य जयतुजयतुमहा राज एषचार्वाकः प्रण

मति महामोहः चार्वाकस्वागतंभोइहोपविश्यतां चार्वाकः उपविश्य एषकलेःसाष्टांगप्रणामः म हामोहः अयकलेर्भद्रमव्याहतं चार्वाकः देवस्यप्र सादात्सर्वत्रभद्रं निर्वर्तितकर्तव्यशेषश्चदेवपादमूलं

मइतिनिश्चयेनजिहासतिहातुमिच्छति नकोपीत्यर्थः यदित्यस्यतितदासमूर्खइत्यर्थः २३ महामोहः उपजनयंति प्रापयंति विलोक्येत्यादिप्रणामइत्यंत मतिरोहितार्थं अयकलेरिति भद्रंकुशलंअव्याहतं नव्याहतं नोपद्रुतमित्यर्थः निर्वर्तितेति निर्वर्तितः कृतः कर्तव्यस्यकार्यजातस्यशेषोयेनसः कृत कार्यः सेवकस्त्वतीवप्रभूणांप्रियइतिभावः

संपादितकार्यस्यभृत्यस्यप्रभुदर्शनंमहतेगुणायइत्याह आज्ञामिति यइत्य
ध्याहारः सइत्यपि यः प्रभूणांपादांबुरुहंपादांबुजंनमस्यतिसः धन्यः कीद्द
शः सन् उच्चैरतिशयेन प्रमोदं प्रकृष्टानंदंयथास्यात्तथा अनुमोदितंसंतोषास्प-
दीकृतंदर्शनंयस्य ताद्दशः सन् किंकृत्वा प्रभूणांमहतींसानंदामाज्ञामवाप्य
द्विषतांरिपूणांनिपातेविनाशेकृतेसति तामाज्ञांनिर्वर्त्यसंपाद्य सपदि तस्मिन्ने-
वक्षणेलब्धः स्फारप्रसादोयस्य ताद्दशः सन्नित्यपियोज्यं २४ कियत्संपन्नमि-
तिप्रश्नेउत्तरमाह व्यतीतेति महाजनः धर्मपरोलोकः ब्राह्मणादिः यथेष्टचेष्टां

द्रष्टुमिच्छति यतः आज्ञामवाप्यमहतींद्विषतांनिपा
तेनिर्वर्त्यतांसपदिलब्धस्फारप्रसादः उच्चैःप्रमोदमनु
मोदितदर्शनः सन्धन्योनमस्यतिपदांबुरुहंप्रभूणां
२४ महामोहः अथतस्मिन्कलौकियत्संपन्नं चा
र्वाकः देवव्यतीतवेदार्थपथः प्रथीयसींयथेष्टचेष्टां
गमितोमहाजनः तदत्रहेतुर्नकलिर्नचाप्यहंप्रभुप्र
सादोहितनोतिपौरुषं २५ तत्रोत्तरपथिकाःशश्वा
त्याश्चत्रयीमेवत्याजिताः शमदमादीनांकेवकथा
अन्यत्रापिप्रायशोजीविकामात्रफलैवत्रयी यथा
ह आचार्यः अग्निहोत्रंत्रयोवेदास्त्रिदंडंभस्मगुंठ
नं प्रज्ञापौरुषहीनानांजीविकेतिबृहस्पतिः २६
तेनकुरुक्षेत्रादिषुतावत्देवेनस्वप्नेपिविद्याप्रबोधो
दयोनाशंकनीयः महामोहः साधुसंपादितं

अविहितचेष्टां परस्त्रीगमनमद्यपानादिरूपां गमितः प्रापितः कीद्दशोमहा
जनः व्यतीतः वेदार्थपंथाः संध्याग्निहोत्रादिः यस्मात्सः कीद्दशीं चेष्टांप्रथीय
सींप्रचुरां महामोहएवतत्रहेतुरित्याह तदत्रेति हिनिश्चितंअत्रधर्मत्यागे अहं
चार्वाकः कलिर्वानहेतुर्यतः तत्तस्मात्कारणात् प्रभुप्रसादः पुरुषस्यकर्मपौ
रुषंतनोतिविस्तारयतीत्यर्थः २५ त्रयीमेवेति वेदत्रय्युक्तधर्मानित्यर्थः आ-
चार्योबृहस्पतिः अग्निहोत्रमिति त्रिदंडंत्रयोदंडाः यस्मिन्कर्मणितत् त्रिदं
डंसंन्यासइत्यर्थः सर्वांगेभस्मोद्धूलनंभस्मगुंठनं जीविकाजीवनेहेतुः २६ तेने

ति तेनकारणेनकुरुक्षेत्रादिषु आदिपदसंग्राह्यमायापुरीकेदारबदरिकाश्रमेषु देवेनमहाराजेनमोहेनेत्यर्थः विद्याचप्रबोधश्चतयोरुदयः तदनुगृहीतान्वयमिति तयाविष्णुभक्त्या अनुगृहीत अन्वयोवंशोयस्यतं आलोकयितुंनप्रभवामः किमुतसाक्षात्विष्णुभक्तिं अवधातव्यंसावधानेनभवितव्यं आत्मगतं स्वमन

महत्खलुतत्तीर्थव्यर्थीकृतं चार्वाकः देवान्यच्च विज्ञाप्यमस्ति महामोहः किंतत् चार्वाकः अस्ति विष्णुभक्तिर्नाममहानुभावायोगिनीसातुकलिना यद्यपिविरलप्रचाराकृतातथापितदनुगृहीतान्वयमालोकयितुमपिनप्रभवामः तदत्रदेवेनावधातव्यमिति महामोहः सभयमात्मगतं आःप्रसिद्ध महाप्रभावासायोगिनीस्वभावाद्विद्वेषिणीचास्माकंदुरुच्छेद्या भवतु प्रकाशं भद्रअलमनयाशंकया कामक्रोधादिप्रतिपक्षेषुकुतोभयमुदेष्यति चार्वाकः तथापिलघीयस्यपिरिपौनानवहितेनजिगीषुणाभवितव्यं यतः विपाकदारुणोराज्ञांरिपुरल्पोप्यरुंतुदः उद्वेजयति सूक्ष्मोपिचरणंकंटकांकुरः २७ महामोहः नेपथ्याभिमुखंविलोक्य कःकोत्रभोः प्रविश्य दौवारिकः दौवारिकः आज्ञापयतुदेवः महामोहः

स्यैववदतिनबहिरित्यर्थः आःपीडायां प्रतिपक्षेषुशत्रुषु अनवहितेन असावधानेन विपाकेति राज्ञामल्पोपिरिपुःविपाकदारुणः विपाकेपरिणामेदारुणः दुःखदः अरुर्मर्मस्थानंतुदतीत्यरुंतुदः उक्तमर्थंद्रढयति उद्वेजयतीति उद्वेगंजनयति शेषंस्फुटं २७ कःकोत्रेत्यादिमहामोहइत्यंतंस्पष्टं

असत्संगइतिदौवारिकसंबोधनं प्राकृतेहग्गेइतिशब्दोऽस्मदएकवचनं अहं उत्कलदेशादागतोस्मि अस्तितत्रसागरतीरसन्निवेशेपुरुषोत्तमसंज्ञितंदेवायतनं तस्मिन्मदमानाभ्यांभट्टारकाभ्यांमहाराजसकाशंप्रेषितोस्मि एषावाराण

भोअसत्संगआदिश्यतांकामक्रोधलोभमदमान मात्सर्यादयः यथायोगिनीविष्णुभक्तिर्भवद्भिरेवा वहितैर्विहंतव्येतिदौवारिकः यदाज्ञापयतिदेवइति निष्क्रांतः ततःप्रविशतिपत्रहस्तःपुरुषः हग्गेउक्क

लदेसादोआगदोह्मि अत्थितत्थ साअलतीलसण्णिवेसेपुलिसो त्तमसंविअंदेवदाअदणं तस्सिंम दमाणेहिंभट्टकेहिंमहालाजस आसंपेसिदोह्मि विलोक्य एसा वालाणसीएदंलाजउलंजावप्प विसामि प्रविश्य एसेभट्टके च

वाकेणसद्धं किं वि मंतअंतिठ्ठदि ताउपसप्पामिणं उपसृत्य जेदुजेदुभट्टकोएदंपत्तंनिलुप्पमणंपेरखे दुभट्टकेहिं महामोहः पत्रंगृहीत्वा कुतोभवान् पुरु

षः हग्गेपुलिसोत्तमादो आगदोह्मि महामोहः स्वगतं कार्यमत्याहितं भविष्यति प्रकाशं चार्वा कगच्छकर्तव्येष्ववहितेन भवताभवितव्यं चार्वाकः यदाज्ञापयतिदेवइतिनिष्क्रांतः

सी इदंराजकुलंयावत्प्रविशामि एषभट्टारकः चार्वाकेणसार्धं किमपिमंत्र यंस्तिष्ठति तदुपसर्पाम्येनं जयतुजयतुभट्टारकः इदंपत्रंनिरूप्यमाणंदी यमानंप्रेक्ष्यतांभट्टारकैः हग्गेइति अहंपुरुषोत्तमादागतोस्मि इतिशेषः

महामोहइत्यादि पत्रंवाचयतीत्यंतंस्फगमं परमश्चासावीश्वरश्चएतादृशोयो मोहः यथेति भद्रमव्याहतंकल्याणंनिर्विघ्नं देवीत्यादिसक्रोधमित्यंतंस्कुबोधं तदेतत्प्रमाणमितिज्ञात्वादेवोवदतीतिशेषः अतिमुग्धाः अतिशयेनमूढाः शांतेः इंद्रियोपशमात् अस्याःशांतेः इंद्रियोपशमाभावंप्रकटयति तथाहि धातेति धाताब्रह्माविश्वस्यविशिष्टायासृष्टिस्तन्मात्रेतिनिरतः तत्परः दक्षाध्वर

महामोहः पत्रंवाचयति स्वस्तिश्रीवाराणस्यांमहाराजाधिराजपरमेश्वरमहामोहपादान् पुरुषोत्त

मायतनान्मदमानोसाष्टांगपातं प्रणम्यविज्ञापयतः यथाभद्रमव्याहतं अन्यच्चदेवीशांतिर्मात्राश्रद्धयासहविवेकस्यदौत्यमापन्नाविवेकसंगमायदेवीमुपनिषदमहर्निशंप्रबोधयति अपिच कामसहचरोपिधर्मोविराग्यादिभिरुपजप्तइवलक्ष्यते यतः कामाद्विच्छिद्यक्कचिन्निगूढः प्रचरति तदेतदुक्तार्थंज्ञात्वादेवःप्रमाणमिति महामोहःपत्रंवाचयित्वा सक्रोधं आःकिमेवमतिमुग्धाः शांतेरपिबिभ्यति कुतोस्याः संभवः धाताविश्वविसृष्टिमात्रनिरतोदेवोपिगौरीभुजाश्लेषानंदविघूर्णमाननयनोदक्षाध्वरध्वंसनः दैत्यारिःकमलाकपोलमकरीलेखांकितोरःस्थलः शेतेब्धावितरेषुजंतुषुपुनः कानामशांतेःकथा २८

ध्वंसनोदक्षयज्ञविनाशकोदेवोपित्रिनेत्रोपिगौरीभुजाभ्यामाश्लेषः आलिंगनंतेनजनितोयः आनंदः स्फुरवंतेनविशेषेणघूर्णमानानिनयनानियस्यसः एतेनकामक्रोधासक्तोमहादेवइतिसमस्तसूत्रि दैत्यारिः विष्णुः कमलायालक्ष्म्याः कपोलंगंडस्थलं तस्मिन्मकरीलेखामत्स्याकृतिः पत्रलेखातयाअंकि

तंचिन्हितंउरस्थलंयस्यसः एतेनायमपिकामासक्तइत्यभाणि अब्धौक्षीर समुद्रेशेतेस्वपिति एतादृशेषुसिद्धेषुशांत्यभावेइतरेषुप्राणिषु शांतेः कानाम कथानकापीत्यर्थः २८ कामदूतस्यनामजाल्मइतिअसमीक्ष्यकारित्वात् जा

पुरुषप्रति जाल्मगच्छका मंसत्वरमुपेत्यादेशमस्मा कंप्रतिपादय यथादुराश योधर्मइत्यभिख्यग- तं तदस्मिन्मुहूर्तमपिन विश्वसितव्यंदृढंबध्वाधा रयितव्यइति पुरुषः जं देवोआणवेदिइतिनिष्क्रां

तः महामोहः स्वगतं वि चिंत्यशांतेःकोभ्युपायः अथवा अलमुपायांतरे ण क्रोधलोभावेवतावद त्रपर्याप्तौ प्रकाशं कः कोत्रभोः प्रविश्यदौवारि कः दौवारिकः आज्ञापय

तुदेवः महामोहः तावदाहूयतांक्रोधोलोभश्चपुरु षः यदादिशतिदेवइतिनि

ष्क्रांतः ततःप्रविशतिक्रोधो लोभश्च क्रोधः श्रुतंमया यथाशांतिश्रद्धाविष्णुभ क्तयोमहाराजेनप्रतिपक्ष भावमाचरंतीति

त्मोसमीक्ष्यकारीस्यादित्यमरः आदेशंआज्ञांप्रतिपादयकथय दुराशयोदु- र्हृदयः पुरुषः यद्देवआज्ञापयति कोभ्युपायइति शांतिनिराकरणायइतिशेषः

महाराजेनप्रतिपक्षभावंशत्रुत्वं आत्मनिरपेक्षितंस्वात्मापेक्षारहितंस्वजीव
नरहितं अंधीकरोमीति भुवनंभूमंडलंअंधीकरोमि अनंधमंधंसंपादयामि
तथाकरोमीत्यंधीकरोमि दृष्ट्यगोचरंकरोमीत्यर्थः बधरीकरोमिश्रोत्रहीनं
करोमि धीरंधैर्ययुक्तंअधीरतामितिशेषः सचेतनंसहृदयं अचेतनतांहृदयशू
न्यतांनयामिप्रापयामि अंधीकरणादेः प्रयोजनमाह येनकृत्यंकर्तव्यंनप-
श्यति येनहितंनशृणोति धीमान्बुद्धिमानपिअपिशब्दात्तान्याकलयती
त्यर्थः येनअधीतंपठितंधर्मशास्त्रादिनप्रतिसंदधातिनस्मरतीत्यर्थः मदुपगृ-
हीताः लोभवंतः मनोभिलाषरूपायानदीपरंपरातासेवेत्यर्थः २९ संत्येतइति

अहोमयिजीवतिकथमासामात्मनिरपेक्षितंचेष्टि
तं तथाहि अंधीकरोमिभुवनंबधिरीकरोमिधीरं
सचेतनमचेतनतांनयामि कृत्यंनपश्यतिनयेनहितं
शृणोतिधीमानधीतमपिनप्रतिसंदधाति २९ लोभः
अरेमदुपगृहीतामनोरथनदीपरंपरामेवतावन्नतरि-
ष्यंति किंपुनःशांत्यादीश्चिंतयिष्यंति पश्यसरवे
संत्येतेममदंतिनोमदजलप्रम्लानगंडस्थलावात-
व्यायतपातिनश्चतुरगाभूयोपिलप्स्येपरान् एत
ल्लब्धमिदंलभेपुनरिदंलब्धाधिकंध्यायतांचिंताज
र्जरचेतसांबतनृणांकानामशांतेःकथा ३० क्रोधः
सरवेविदितस्त्वयामत्प्रभावः

एतेममदंतिनोगजाःसंति कीदृशाःदंतिनः मदजलेनमदोदकेनप्रम्लानानि
गंडस्थलानियेषांते एतेममतुरगाः संति कीदृशास्तुरगाः वातवत् वायुवत्
व्यायतविशेषेणावस्तृतयथास्यात्तथापतंतिगच्छंतितच्छीलाः भूयोपिपुन-
रपिपरान् अन्यान्लप्स्येप्राप्स्यामि किंचएतल्लब्धंप्राप्तंइदंपुनर्लभेप्राप्नोमि
इदंलब्धात्अधिकंध्यायतांचिंतयतांनृणांचिंतयाजर्जरंशिथिलंचेतोयेषां
तेतादृशानांप्राणिनांबतइतिनिश्चयेनशांतेः शांतिमार्गस्यकाकथाकावार्ताअपि-
तुनकापीत्यर्थः ३० क्रोधःमत्प्रभावः ममक्रोधस्यप्रभावःसामर्थ्यंइतियोजना

त्वाष्ट्रमिति सुरपतिरिंद्रः त्वाष्ट्रंत्वष्टुः अपत्यं वृत्रंवृत्रासुरं अपातयत् अमारयत् चंद्रार्धचूडः चंद्रशेखरोदेवः ब्रह्मणःशिरः अच्छिनत् छेदयामास कौशिकोविश्वामित्रः वसिष्ठतनयान् आसमंतात्सर्वानित्यर्थः अघातयत् अमारयत् क्रोधाक्रांतानामेतानिचरित्राणीतिध्वनितं स्वीयंसाक्षात् पौरुष माह अपिच विद्येति अहंईदृशान्यपिकुलानिक्षणात् शीघ्रमेव उन्द्धर्तुं उत्कर्षेणहर्तुंनाशयितुमीशाः समर्थः कीदृशानि कुलानिविद्यावंतिज्ञानवंत्यपि कीर्तिमंतियशस्विन्यपि सदाचारेण वेदविहिताचारेणावदातानिनिर्मलान्यपि

त्वाष्ट्रंवृत्रमपातयत्सुरपतिश्चंद्रार्धचूडोच्छिनद्दे
वोब्रह्मशिरोवसिष्ठतनयानाघातयत्कौशिकः
अपिच विद्यावंत्यपिकीर्तिमंत्यपिसदाचारावदा
तान्यपिप्रोच्चैः पौरुषभूषणान्यपिकुलान्युद्धर्तु
मीशाःक्षणात् ३१ लोभः तृष्णेइतस्तावत् प्रवि

श्यतृष्णा तृष्णा किंआणवे
दि अज्जउत्तो लोभः प्रिये
श्रूयतां क्षेत्रग्रामवनाद्रिपत्त
नपुरद्वीपाख्यमामंडलप्रत्या-
शाधनसूत्रबद्धमनसांलब्धा
धिकंध्यायतां तृष्णेदेवियदि
प्रसीदसितनोष्यंगानितुंगानि
चेत्तद्बोः प्राणभृतांकुतः शमकथाब्रह्मांडलक्षैरपि ३२

प्रोच्चैः पौरुषभूषणान्यपि अतिशयेनपुरुषार्थभूषणानिएवंगुणयुक्तानि नाशयितुंसमर्थः किंपुनरन्यादृशानीतिभावः किमाज्ञापयतिआर्यपुत्रः क्षेत्रग्रामेति क्षेत्रादिमंडलांतानि यानितेषांयाप्रत्याशा प्रतिवस्तु अधिकप्राप्तीच्छातदेवघनंदृढंसूत्रंतेनबद्धंमनोयेषांते लब्धात् प्राप्तादधिकंध्यायतां चिंतयतां प्राणभृतांजीवानां भोः तृष्णेयदिप्रसीदसि प्रसन्नाभवसि अंगानितुंगानिचेत्तनोषिपुष्टानिचेत्करोषितत् तदाब्रह्मांडलक्षैरपिप्राप्तैः शमकथा शमवार्ताकुतः नकुतोपीत्यर्थः अधिकाशाविच्छेदाभावादितिभावः ३२

आर्यपुत्रस्वयमेवतावदहंएतस्मिन्नर्थेनित्यंअभियुक्ता सांप्रतंआर्यपुत्रस्य आज्ञयाब्रह्मांडकोटिभिरपिनमेउदरंपूरयिष्यते हिंसा एषास्मि आज्ञापयत्वार्यपुत्रः सहधर्मचारिण्यामद्वचनकारिण्याईषत्करएवस्कुकरएवेत्यर्थः क्रोधस्यस्वरूपंदर्शयति केयंमातेति बंधुवर्गइत्यंतंस्कुगमान्वयं कुटिलाः वक्राश्चतेविटाः जाराश्चतद्द्यत्स्कुट्टचेष्टितंसौहार्दचेष्टितंएषांताद्दशा अमी–

तृष्णा अज्जउत्त सअं जेव दाव अहं एदस्सिं अत्थेनिच्चं अहिजुत्ता संपदं

अज्जउत्तस्स अण्णाए बम्हंडकोडिहिरविणमेउदरंपूरइस्सदि क्रोधः हिंसेइतआगम्यतां प्रविश्य हिंसा हिंसा एसम्हिआणवेदु अज्जउत्तो क्रोधः प्रियेत्वयासहधर्मचारिण्यामातृपितृवधोपिममेषत्करएव तथाहि केयं मातापिशाचीकइवहिजनकोभ्रातरः केहिकीटाव ध्योयंबंधुवर्गः कुटिलविटस्कुट्टचेष्टिताज्ञातयोमी हस्तोनिष्पीड्य आगर्भंयावदेषांकुलमिदमखिलं नैवनिःशेषयामिस्फूर्जतः क्रोधवन्हेर्नदधतिविरतिं तावदंगेस्फुलिंगाः २३

ज्ञातयः केनकेपीत्यर्थः पित्रादीनामप्युपालंभे अन्येषामुपालंभेकैवकथेत्य भिप्रायः हस्तोनिष्पीड्येति आगर्भमिति क्रोधवन्हेः स्फुलिंगाः अंगेशरीरे विरतिंविरामंनदधतिनोररीकुर्वंति कुतइत्याह यावत्एषांबंध्वादीनां अखिलं समस्तंकुलं आगर्भंगर्भावधिनैवनिःशेषयामि निःशेषंकरोमितावत्स्फुलिंगानविरताभवंतीत्यर्थः कीद्दशाः स्फुलिंगाः स्फूर्जंतः देदीप्यमानाः मारणा

दिनैवक्रोधः शाम्यतीतिहृदयं ३३ उपक्षेपेण उपक्रमेणहृदयं मत्यागतं उपा यांतरमाह तथाहीति परतंत्राश्रद्धाधीना व्याकृष्टुंतिरस्कर्तुं विभ्रमावती

विलोक्य एषस्वामी तदुपसर्पामः सर्वेउपसृत्य

जयतुजयतुदेवः महामोहः श्रद्धायास्तनयाशांति रस्मद्द्वेषिणीसाभवद्भिर्निग्राह्येतिसर्वेयदादिशतिदे वइतिनिष्क्रांताः महामोहः श्रद्धायास्तनयाइत्युप क्षेपेणउपायांतरमपिहृदयमारूढं तथाहि शांते र्माताश्रद्धासाचपरतंत्रातत्केनाप्युपायेनोपनिषत्स

काशात्तावच्छ्रद्धापकर्षणंक र्तव्यं ततोमातृवियोगदुःखा दतिमृदुलतयाशांतिरुपरता भविष्यति अवसीदंतोविन शिष्यति श्रद्धांव्याकृष्टुंमि- थ्यादृष्टिरेवविलासिनीपरंप्र गल्भेति तदस्मिन्विषयेसेवनि योज्यता पार्श्वतोविलोक्य

विभ्रमावतिसत्वरमाहूयतांमिथ्यादृष्टिः विभ्रमावती

यद्देवआज्ञापयति मिथ्यादृष्टिः सखिचिरंदृष्टस्य महाराजस्य कथंमुखंप्रेक्षिष्येन

खलुमहाराजउपालप्स्यति विभ्रमावती सखितवदर्शनेन आत्मानमेवम-
हाराजोनवेत्स्यतेकुतउपालप्स्यति मिथ्यादृष्टिः सखिकिंममालीकंसौभाग्यं
संभाव्यविडंबयसि विभ्रमावती सखिसांप्रतमेवप्रेक्षिष्ये अलीकत्वंसौ-
भाग्यस्य अन्यच्च निद्राघूर्म्याकुलंप्रियसख्यालोचनंप्रेक्षामि तत्किंखलु

जंदेवोआणवेदिइतिनिष्क्रम्यमिथ्यादृष्ट्यासहप्रवि
शति मिथ्यादृष्टिः सहिचिर
दिठ्ठस्स महालाजस्सकहंमुहं
पेक्खिस्सणं खुमहाराओ उ
वालहिस्सदि विभ्रमावतीस
हितुव मुहुदंसणेण अप्पाणं
जेव्व महाराओ णवेइस्सदिकु
दो उवालहिस्सदि मिथ्यादृष्टिः

सहि किं मा अलीअं सोहग्गं संभाविअ विलंबेसि वि
भ्रमावती सहि संपदं जेव्व पेक्खिस्सं अलिअतणं सो
हग्गस्स अण्णच्च णिद्दाघुम्माउलं पिअसहीए लोअ
णं पेक्खामि ता किं खु पिअसहीए लोअणस्स विणि
द्दाए कालणं मिथ्यादृष्टिः सहि एकवल्लहा विजा इ
त्थिआ भोदि ताए विणिद्दादुल्लहा किंउण अह्माणं
सअललोअवल्लहाणं विभ्रमावती केके उण पिअस
हीए वल्लहा मिथ्यादृष्टिः महाराओ अदो उवरि का
मो क्कोहो लोहो अहं आरोति अहवा अलं विसेसे
ण एत्थकुले जो जादो ण मए विणा बालो वुविरो जुवा
वाहिद अणिहिदए रद्दिं आहाइं अहिरमदि

प्रियसख्यालोचनस्यविनिद्रतायाः कारणं मिथ्यादृष्टिः सखिएकवल्लभापि-
यास्त्रीभवति तस्याअपिनिद्रादुर्लभाकिंपुनरस्माकंसकललोकवल्लभानां
विभ्रमावती केकेपुनः प्रियसख्यावल्लभाः मिथ्यादृष्टिः महाराजः अत उपरि
तदनंतरंकामः क्रोधः लोभः अहंकारइति अथवा अलंविशेषेण अस्मिन्कुले

योजातोनमयाविनाबालः स्थविरोयुवा वात्हृदयनिहितयारात्रिंदिनानि अभिरमते त्हृदयनिहितयामयाविनेतियोजनाप्राकृते विभ्रमावती ननु इहकामस्यरतिः क्रोधस्यहिंसालोभस्यतृष्णापरमप्रियाःश्रूयंते तासांकथं यत्प्रियतमेनित्यंरमंतीईर्ष्यांनजनयसि मिथ्यादृष्टिः सखिईर्ष्येतिकिंभण्य तेननताअपिमयाविनामुहूर्तमपितिष्ठंति विभ्रमावती सखिअतएवभणा- मितवसदृशीसुभगास्त्रीपृथिव्यांनास्ति यस्याः सौभाग्यमहर्द्धिविधुरित-

विभ्रमावती णं एत्थकामस्सरदी कोहस्स हिंसा लोहस्स तिण्हापरमप्पिआ सुणी अदि तास्सं क धंजंप्पिअदमे णिच्चं रमंदी ईस्सां णजणेसि मि थ्यादृष्टिः सहि इस्से त्ति किं भणी अदिणता अ विमए विणा मुहूत्तं विचिट्ठदि विभ्रमावती स खि अदो जेव्व भणामि तुवं सदिसी सुहगा इत्थि आ पुहिवी एणत्थि जाए सो हग्ग महन्द्दि विहु रिद हिदआ सवन्ति ओ पसादंपडि च्छंति सहि अण्ण ञ्च भणामि एव्वं णिद्दाउलहि अआ विसंठुलस्ख लञ्चरणणे उरझंकालमुहलाए गदीए महा राअं संहाव अंदी संकिद हिद अं करिस्सदि पिअसहीत्ति तक्केमि मिथ्यादृष्टिः किंएत्थ संकिदव्वं णं अह्मा णं महारा अणि उत्तणं जेव्व एसो अविणवो अ वि असहि दंसण मत्तपसंणाणं पुरिसाणं केरिसं भ अं महामोहः विलोक्य

त्हृदयाः सपत्न्यः प्रसादं प्रतीच्छंति वाच्छंति सौभाग्यस्यमहतीऋद्धिः मह- र्द्धिः महासंपत्तिः तयाविधुरितं रहितं त्हृदयं यासांताइति प्राकृतेसमासः स- खि अन्यच्चभणामि एवंनिद्राकुलत्हृदयाविसंष्ठुलस्खलच्चरणनूपुरझंकार मुखरयागत्यामहाराजंसंभावयंतीशंकितत्हृदयंकरिष्यति प्रियसखीतित- र्कयामि विसंष्ठुलंस्वस्थानात्भ्रष्टं नूपुरस्यझंकारः शब्दः तेनमुखरयासश ब्दया मिथ्यादृष्टिः किमत्रशंकितव्यं नन्वस्माकंमहाराजनियुक्तानामेवए

षोविनयः अपिचसखि दर्शनमात्रप्रसन्नानां पुरुषाणांकीदृशंभयम्
याएषेति श्रोणीभारेति याएषाअगणितगुणग्रामा दोलायाआंदोलनं
चालनं तद्दल्लोलेचंचले येकंकणेकरभूषणेतयोर्योरणत्कारः शब्दः सउत्तरो
प्रवर्तीयत्रयस्यांक्रियायां यथास्यात्तथा सर्पति आगच्छति कीदृशीश्रोण्या
भारः नितंबभारस्तस्य भरः अतिशयः तेन अलसा पुनः कीदृशी आदरेण
प्रयत्नेन अर्थात् शिथिलधम्मिलात् गलंतिचतानिमाल्यानिच तेषांयाउपवृ-
त्तिः संवरणंतस्यछलंमिषंतस्माल्लीलया उत्क्षिप्तौ भुजौ ययासा पुनः कीदृशी

अयेसंप्राप्तैवप्रियामिथ्यादृष्टिः याएषा श्रोणी
भारभरालसादरगलन्माल्योपवृत्तिछलाल्ली
लोत्क्षिप्तभुजोपदर्शितकुचोन्मीलन्नखांकावलिः
नीलेंदीवरदामदीर्घतरयादृष्ट्याधयंतीमनोदोला
दोलनलोलकंकणझणत्कारोत्तरंसर्पति ३४

विभ्रमावती एसो
महाराओ उपसप्प
दु पिअसही मि
थ्यादृष्टिः उपसृत्य
जअदु जअदु महा
राओ महामोहः
प्रिये दलितकुचन
खांकमंकपालींरचयममांकमुपेत्यपीवरोरु



उपदर्शितौयौकुचौस्तनौतत्र उन्मीलंती प्रकाशंती नखांकानांनखक्षतानामा
वलिः पंक्तिः यस्यासा पुनः कीदृशी नीलानियानिइंदीवराणिनीलोत्पलानि
तेषांदामपाला तद्दीर्घतरया दृष्ट्यामनः धयंतीप्रीणयंती ३४ विभ्रमावती
एषमहाराजः उपसर्पतुप्रियसखी मिथ्यादृष्टिः जयतुजयतुदेवोमहाराजः
महामोहः प्रिये दलितेति भोपीवरोरु मांसले ऊरूयस्यास्तत्संबोधने भोपी
वरोरु प्रियेदलिताः प्रकराः कुचयोर्नखांकास्तनयोर्नखक्षतानि यस्यां क्रिया
यांयथास्यात्तथा अंकपालीं आलिंगनं रचयदेहि किंकृत्वा ममअंकमुपेत्य

भ्रोहरिणाक्षि शंकरांके शंकरोरोस्थिताचासोहिमशैलस्रुताचहिमपर्वतपुत्रीत-स्याविलासस्तस्य लक्ष्मींशोभां अनुहर अनुकुरु एतेनोमामहेश्वराविवनिर्बंध भावाभ्यांस्थातव्यमितिध्वनितं ३५ सस्मितंसहासंतथाकरोति आलिंगनसुख मनुभवतीत्यर्थः परिष्वंगात् आलिंगनात् परावृतंव्यतीय पुनरागतं यः प्रागा-सीदिति सकोपि अचिंत्यसामर्थ्यः मान्मथोमन्मथात्कंदर्पाज्जातः विकारः प रिणामः मेमम अंतर्वृत्तीर्मानसवृत्तीः तिरयतितिरस्करोति सः कः यः अभिन-वंचनद्वयश्चनूतनंवयः तस्य विभ्रमः विलासः तस्मादवासंजन्मयेनतादृशः प्रा-

अनुहरहरिणाक्षिशंकरांकस्थितहिमशैलस्रुताविलासलक्ष्मीं ३५ मिथ्यादृष्टिः सस्मितं तथाकरोति महामोहः आलिंगनसुखमभिनीय अहोप्रियायाः परिष्वंगात्परावृत्तंनवयौवनं तथाहि यः

प्रागासीदभिनववयोविभ्रमावाप्तजन्माचित्तोन्माथीविगतविषयोपप्लवानंदसांद्रः वृत्तीरंतस्तिरयतितवाश्लेषजन्मास कोपिप्रौढप्रेमानवइवपुनर्मान्मथोमेविकारः ३६ मिथ्यादृष्टिः महाराअ अस्सहं वि संपदं णवजोवणा विअ संवुत्ताणं खु भावाणुबन्द्ं पेमकालेणा वि वि लिअदि आणवेदु महाराओ किं णिमित्तं भट्टिणासुमरिदह्मि

गासीत्पूर्वंबभूव मान्मथोविकारः कीदृशः चित्तंमनः उन्मथ्नाति उन्मादयुक्तं करोति तच्छीलः पुनःकीदृशः विगतोविविधः विषयोपप्लवोविषयसंबंधो यस्मिन् एतादृशोयआनंदः तेनसांद्रोघनः पुनःकीदृशः तव आश्लेषआलिंगनंतस्माज्जन्मयस्यसः पुनःकीदृशः प्रौढंप्रेम उत्कृष्टप्रीतिर्यस्मिन्सः पुनरितिवितर्के नवइव नजातोनजनिष्यते तादृशइवेत्यर्थः ३६ मिथ्यादृष्टिः महाराजअहमपिसांप्रतं नवयौवनेवसंवृत्तानखलुभावानुबन्द्ंप्रेमकालेनापि

विलीयते भावोमनोभिप्रायः तेनानुबन्धंसंपादितमितिप्राकृतार्थः आज्ञाप
यतुमहाराजः किंनिमित्तं भट्टारकेणस्मारितास्मि महामोहः प्रिये स्मर्यत
इति हेवामोरु सुंदरोरु हृदयाच्चित्ताद्बहिः योभवेद्वर्ततेसः निश्चितंस्मर्यते
तवस्मरणमयुक्तमित्याह भवतीममचित्तमेवभित्तिः तस्यांशालभंजीवचित्र
न्यस्तपुत्तलिकेवराजतेशोभते सर्वदाचित्तेसत्वान्नस्मरणमितिभावः ३७ मि-
थ्यादृष्टिः महाप्रसादः तथाप्याज्ञापयतुमहाराजः दास्याःपुत्रीकुट्टिनीतिगा

महामोहः प्रिये स्मर्यतेसाहिवामोरु योभवेद्हृदया
द्बहिः मच्चित्तभित्तोभवतीशा
लभंजीवराजते ३७ मिथ्यादृ
ष्टिः महाप्पसादो तधा वि आ
णवेदु महाराओ महामोहः
यथैवप्रकाशितैरंगैःसर्वत्रविच
रसि तथैवप्रवर्त्तितव्यं अन्यच्च
दास्याःपुत्रीश्रद्धाविवेकेनसह
उपनिषदंयोजयितुंकुट्टिनीभावमापन्ना अतः प्र
तिकूलामकुलजांपापांपापानुवर्तिनीं केशेष्वाकृ
ष्यतांरंडांपारखंडेषुनियोजय ३८ मिथ्यादृष्टिः
एद्दहमेत्तके वि विसए अलं भट्टिणो अहिणिवेसे
ण व अणमत्तकेण जेव भट्टिणो दासी सन्द्धा अ
ण्णं करिस्सदि

लिप्रदानं प्रतिकूलामिति तांरंडांनियामकशून्यांश्रद्धांपारखंडे षुसद्धर्मशून्ये
षु केशेष्वाकृष्यनियोजयप्रवेशाय कीदृशीं रंडांप्रतिकुलां अस्मदननुकूलका
र्यकर्त्रीं पुनः कथंभूतां अकुलजां दुर्भगाप्रसूतां संप्रतिमनोनिवृत्तावनुरागो
नास्तीतिदुर्भगा पुनःकीदृशीं कुलक्षयप्रवृत्तत्वात्पापां पुनःकीदृशीं पापाः
शमादयः कुलक्षयहेतुत्वादेव तेषामपिपापत्वं तदनुवर्तिनीं तदनुकूलां ३८
मिथ्यादृष्टिः एतावन्मात्रकेऽपि विषये अलंभर्तुरभिनिवेशेन वचनमात्रकेणै
वभर्तुर्दासीश्रद्धा आज्ञांकरिष्यति

सारवलुमयामिथ्या धर्मोमिथ्यामोक्षोमिथ्या वेदमार्गोमिथ्या रूरवविघ्नकराणि मिथ्याशास्त्रप्रलपितानि मिथ्यास्वर्गफलविद्येति भण्यमानाझटितिवेदमार्गमेवपरिहरिष्यति किंपुनरुपनिषदं अपिच विषयानंदविमुक्तेमोक्षेदोषान्

सा रवु मए मिथ्या धम्मो मिथ्या मोरखो मिथ्या वेद मग्गो मिथ्या रूहविघ्घअराइं मिथ्यासात्थपलविदाइं मिथ्यासग्ग फलविज्जेत्ति भणिज्जंती झडिति वेदमग्गं जेव्व परिहलिस्सदि किंउण उपणिसदं अपिच विस आणंद विमुक्के मोरखे दोसाणं दंसअंतीए उपणिसदो वि विरत्ता करिस्सदि अचिरं मए स न्द्रा महामोहः यद्येवंसुष्ठु मेसंपादितंप्रियया पुनरालिंग्यचुंबति मिथ्यादृष्टिः भट्टिणोपभासे एव्वं पउत्ते नलज्जेमि महामोहः न द्भवतुवासागारमेवप्रविशामइतिनिष्क्रांताःसर्वे इति श्रीकृष्णमिश्रविरचितेप्रबोधचंद्रोदयनाम्निनाटकेद्वितीयोंकःसमाप्तः २

दर्शयंत्याउपनिषदोपिविरक्ताःकरिष्यते अचिरंमयाश्रद्धा मिथ्यादृष्टिः भर्तुःप्रकाशेणप्रवृत्तेनलज्जामि वासागारं निवासगृहमित्यर्थः इतिश्रीप्रबोधचंद्रोदयप्रकाशेद्वितीयोऽकःसमाप्तः २

# सटीकप्रबोधचंद्रोदयनाटक अंकतृतीय

द्वितीयें ऽ केतत्तद्धर्मानुष्ठानवैफल्यायदंभादीन्प्रेषयामासमहामोहः इदानींतृतीयेंकेविवेकसैन्यपराभवायपाखंडाडंबरः शांतिःसास्त्रं अश्रुभिःसहितं प्रियदर्शनं प्रियं इष्टंदर्शनं मुक्तातंकेति साऽत्रभवतीपूज्या पाखंडहस्तंगतावेदबाह्यकराक्रांताकथंजीवतिनकथमपीत्यर्थः साकायस्याः अमीषुवक्ष्यमाणेषु प्रीतिरस्तीत्यध्याहारःअमीकेतानाह मुक्तातंकेति मुक्तआतंकोभयंयैस्तेतादृशायेकुरंगाः मृगास्तेयास्कतादृश्यः काननभुवोवनस्थल्यःस्खलंतिवारी

ततः प्रविशतिशांतिःकरुणाच शांतिः सास्त्रं मातः २ क्वासिदेहिमेप्रियदर्शनं ततः मुक्तातंककुरंगकाननभुवःशैलाःस्खलद्वारयःपुण्यान्यायतनानिसंततपोनिष्ठाश्चवैखानसाः यस्याःप्रीतिरमीषुसाऽत्रभवतीचांडालवेश्मोदरंप्राप्तागौःकपिलेवजीवतिकथंपाखंडहस्तंगता १

णिजलानियेभ्यस्तेतादृशाःशैलाःतथापुण्यानिपवित्राणिआयतनानिदेवतागृहाणि संततमनवरतं तपोनिष्ठाः तपोनिरताःवैखानसाःवानप्रस्थाः कथंजीवतीत्यत्रतत्रदृष्टांतमाह चांडालस्यवेश्ममंदिरंतस्यउदरंमध्यंप्राप्ताकपिलागौरिवयथाकपिलागौर्हंतॄणांगृहमध्यंप्राप्ताकथमपिनजीवति तथाभवतीपाखंडहस्तंगताकथमपिनजीवतीत्यर्थः कपिलेत्यनेनगवांकपिलागौर्यथाउत्तमाएवंश्रद्धाशांत्यादीनांमध्येउत्तमेतिभावः १

मामनालोक्येति मांअनालोक्यअदृष्ट्वास्नानभोजनजलपानानिनकुरुते अ-
तएवहेतोर्मयारहिताश्रद्धाक्षणमपिनजीवतीतिशांतेरुक्तिः अनेनश्रद्धाशां-
त्योर्व्याप्तिर्दर्शिता २ करुणा सखिएवंविषमज्वलनज्वालाकुलकर्णकटुदुःस
हान्यक्षराणिजल्पंतीसर्वथाविलुप्तजीवितांमांकरोषि विषमाअस्रग्राज्वल-
नस्याग्नेर्ज्वालाःतासांकुलंसमूहस्तद्वत्कर्णकटूनि अतएवदुःसहानीत्येतदक्षर
विशेषणमितिप्राकृतयोजना तत्प्रसीदतुमुहूर्तकंजीवितंधारयितुंप्रियस-

अथवाअलंजीवितसंभावनया यतः मामनालो
क्यनस्नातिनभुंक्तेनपिबत्यपः नमयारहिताश्र
द्धामुहूर्तमपिजीवति २ तद्विनाश्रद्धयामुहूर्तम
पिशांतेर्जीवनंविडंबनमेव तत्सखिकरुणेमदर्थं
चितामारचय यावदचिरमेवहुताशनप्रवेशेनत
स्याःसहचरीभवामि करुणा सास्रं सहि एव्वं वि
समजलणजालाउलकण्णकटुदुस्सहाइं अक्खरा
इं जप्पंती सव्वधा विलुत्तजीविदंमंकरेसि ता पसीद
दु मुहुत्तकं जीविदं धारेदुं पिअसही जावइदोतदो
पुण्णेस्सु अस्समेस्सु मुणि अणसमाउलेस्सु भागीर
हीतीरेस्सु णिउण णिरूवेह्मि कआवि महामोहभी
दा कहिंवि पच्छंणा णिवसदि शांतिः सखिकिमन्वि
ष्यते नीवारांकितसैकतानिसरितांकूलानिवैखा
नसैराक्रांतानिसमिच्चषालचमसव्यामागृहायज्व
नाम्

खीयावदितस्ततः पुण्येष्वाश्रमेषुमुनिजनसमाकुलेषु भागीरथीतीरेषुनिपुणं
निरूपयामि कदाचित्महामोहभीताकुत्रापिप्रच्छिन्नानिवसति नीवारेति हेस
खिमयाक्वचिदपिकुत्रापि अहोइत्याश्चर्येश्रद्धायावार्तापिनाकर्णितास्वलुनि-
श्चयेननश्रुता कलयान्वेषिता इत्यपेक्षायामाह नीवारेति नीवारांकितसैक-
तानिनीवारैररण्यशालिभिः अंकितानिचिन्हितानि सैकतानिपुलिनानियेषांता
नि तथावैखानसैः वानप्रस्थैः आक्रांतानिसरितांनदीनांकूलानितीराणिता-

निअन्वेषितानि पुनः यज्वनांयाज्ञिकानांगृहाः प्रत्येकंसमिधश्चचषालोयूप-कटकः चमसाः पात्रविशेषाः तैः व्यामाः निरूपिताः इष्टाइत्यर्थः एवकारोप्यर्थे चत्वारोप्याश्रमाः प्रतिपदंप्रतिस्थानंनिरूपिताः विलोकिताः ३ करुणा सखिएवं-भणामियदिसैवसात्त्विकीश्रद्धातदातस्यानईदृशींदुर्गतिंसंभावयामि नखलुताद्दश्यः पुण्यमय्यएतादृशीमसंभावनीयांविपत्तिंअनुभवंति अदृष्टमनुकूलंनास्ती त्याह शांतिः सखीति प्रतिकूलेविधातरिसर्वमपिसंभाव्यतएवेत्याह देवीश्रीरिति

प्रत्येकंचनिरूपिताः पतिपदंचत्वारएवाश्रमाः श्रद्धा याः क्वचिदप्यहोखलुमयावार्तापिनाकर्णिता ३ करुणा सहि एव्वं भणामि जइ सज्जेव सत्तई सद्धा नदो ताए ण एरिसीं दुग्गदिं संभावेमि णं खु तारिसी ओ पुण्णमई ओ एतारिसीं असंभावणिज्जां विप दिं अणुहवंति शांतिः सखिकिंनु प्रतिकूले विधात रिनसंभाव्यते देवीश्रीर्जनकात्म जाद शमुखस्या सीद्गृहेरक्षसोनीताचैवरसातलंभगवतीवेदत्रयी दानवैः गंधर्वस्यमदालसाचतनयांपातालकेतु श्छलाद्दैत्येंद्रोपजहारहंतविषमावामाविधेर्वृत्तयः ४ तद्भवतुपाखंडालयेष्वेवतावदनुसरावः करुणा सहि एव्वं भोदुइतिपरिक्रामतः करुणा सत्रासं स हि रक्खसां २ शांतिः कोसौराक्षसः करुणा सहि पेक्ख पेक्ख जो एसो गलंतमलपंक पिछल वीहत्स दुप्पेक्ख देहछवी

हंतइतिदुःखे विधेर्दैवस्य वृत्तयः आचरितरूपाः वामावक्राः विषमाः सकललो कविलक्षणाः देवीदेवतारूपाश्रीः साक्षाल्लक्ष्मीर्जनकस्य आत्मसाक्षात्कारवतः कन्यापिरक्षसो दशग्रीवस्यगृहेआसीत् भगवतीसर्वानुष्ठानमूलभूतावेदत्रय्ये व दानवैर्दैत्यैः रसातलंपातालंनीता अपिना चेत्यपरं गंधर्वस्य मदालसांत यांकन्यांदैत्येंद्रः पातालकेतुसंज्ञः छलात् मिषात् अपजहार स्वनिकटेनीतवान् एवंश्रद्धायाः पाखंडहस्तगमनेदैवंमूलमितिभावः करुणा सखिएवंभवतु क॰

णासत्रासं सखि कोसौ राक्षसः २ करुणा सखि प्रेक्षस्वप्रेक्षस्व यएषगलन्म
लपंकपिच्छलबीभत्सदुःप्रेक्ष्यदेहच्छविः उल्लुंचितचिकुरमुक्तवसनदुर्दर्शनः शि
खिशिखंडपिच्छिकाहस्तइतएवाभिवर्तते गलन्मलपंकः स्रवन्विष्ठाकर्दमः तेन
पिच्छलामसृणाबीभत्साभयानकादुःप्रेक्ष्याद्रष्टुमशक्यादेहच्छविः कांतिर्यस्य
उल्लुंचिताः उत्पाटिताःचिकुराःकेशाः येन मुक्तवसनोदिगंबरः शांतिः निर्वीर्योनिपुं

उल्लुंचिअचिउलमुक्कवसणदुद्दंसणो सिहिसिहंड
पिंछिआहत्थो इदोजेव अहिवट्टइ शांतिः सखि
नायंराक्षसः निर्वीर्यःखल्वयं करुणा ताको ए
सोभविस्सदि शांतिः सखिपिशाचइतिशंके क
रुणा सहिपप्फुरंनमहामऊहमालुब्भासिअभुव
णंतरे जलदि पचंडमत्तंडमंडले कधं पिसाआ
णं अवआसो शांतिः नर्हि अनंतरमेवनरकविव
राद्दुत्तीर्णः कोपिनारकी
भविष्यति विलोक्य वि
चिंत्य आःज्ञातं महामोह
प्रवर्तितोयंदिगंबरसिद्धां
तः तत्सर्वथादूरेपरिहर
णीयमस्यदर्शनमिति प
राङ्मुखीभवति करुणा

सकः तर्हिकएषभविष्यति करुणा सखि प्रस्फुरन्महामयूखमालोद्भासि
तभुवनांतरे ज्वलतिप्रचंडमार्तंडमंडले कथंपिशाचानामवकाशः प्रस्फुरंतःदीप्य
मानायेमयूखाः किरणास्तेषां मालाभिः परंपराभिः उद्भासितंप्रकाशितं यद्भु
वनांतरालं भुवनमध्यप्रदेशः तस्मिन्मार्तंडमंडले सूर्यमंडले तर्ह्यनंतरमेवइ
दानीमेवेत्यर्थः नरकविवरात् नरककुंडात् उत्तीर्णोनिर्गतः आःज्ञातमिति महा

मोहप्रवर्तितः महामोहप्रेषितः इति आः मयैव ज्ञातमित्यर्थः करुणा सखिमुहू र्तकं तिष्ठ यावदत्रश्रद्धामन्वेषयामि यथानिर्दिष्टः यएषइत्यादिनापूर्वमुक्तः दिगंबरः नमोनमो ३ र्हद्भ्यः अस्यभाषामागधी भिक्षुक्षपणकराक्षसांतःपुरवासिचेटकादीनांमागधीत्युक्तमन्यत्र णवेति नवद्वारगृहमध्ये आत्मादीपइवमंतव्यः एषजिनवरभाषितः परमार्थोमोक्षसुखदः अयमभिप्रायः आत्मादीप इवेत्युक्तं तत्र अयमात्मापरिच्छिन्नपरिमाणः गृहमध्येइत्युक्तत्वात् यथादीपः

सहि मुहुत्तकं चिट्ठ जाव एत्थ सद्धं अण्णेसामि उभे तथास्थिते ततःप्रविशति यथानिर्दिष्टोदिगंबरसिद्धांतः दिगंबरः णमोणमो अलिहंताणं २ णवदुवालघलमझ्झे अप्पा दीव ब मतव्वो एसो जिणवलभासिदे पलमत्थ मोरखसुखदे परिक्कामति आकाशे लेले सावका सुणाध २ मल अपुग्गल पिंडे सअलजलेहिं विकेलिसी सुद्धी अप्पा विमलसहाओ लिसिपलिचलणेहिजाणवो किंभणाध केलिसं लिसिपलि अलणंत्ति ता सुणाध दूले चलणपणामो किद सक्कालं च भोअणंमिट्ठं इस्सामेलं ण कज्जं लिसिणं दालं लमंताणं नेपथ्याभिमुखमवलोक्य सद्धे इदो दाव२

घटगृहमासादोदरप्रकाशः परिमितप्रकाशकत्वात् एवमयमात्मा शरीरांतः प्रकाशकत्वात्ततोपिस्वल्पपरिमाणइति उक्तंचजिनैः स्वल्प आत्मा स्वल्पपरिमाण इत्यर्थः आकाशेरेरेश्रावकाः शृणुत २ श्रावकाःशिष्याः मलेति मलमयपुद्गलपिंडे सकलजलैरपि कीदृशीशुद्धिः आत्माविमलस्वभाव ऋषिपरिचरणैर्ज्ञातव्यः पुद्गलंशरीरं पुद्गलंवपुरात्मनइतिधरणी तस्यश्लेष्ममूत्रादिपूर्णत्वात्कथमपिन

शकद्भिरितिभावः परिचरणैः सेवनैः आकांक्षांस्वयमेवोत्थाप्याह किंभणाथेति किंभणथकीदृशंऋषिपरिचरणमिति नतत्श्रृणुत दूरेचरणप्रणामः कृतसत्कारं चभोजनमिदं ईर्ष्यामलंनकार्यंऋषीणांदारान्रमयमाणानांश्रद्धेइतस्तावत् उभेशांतिकरुणे श्रद्धा किमाज्ञापयतिराजकुलं दिगंबरःश्रावकाणांकुलंमुहूर्तमेकमपिमापरिहरिष्यति भवतीतिशेषः श्रद्धा यदाज्ञापयतिराजकुलं करुणा

उभेसभयमालोकयतः ततः प्रविशतितदनुरूपवेषा श्रद्धा श्रद्धा किंआणवेदिराउलं शांतिः मूर्च्छितापतति दिगंबरसिद्धांतः सावकाणंकुलंमुहूत्तमेक्कंवि मा पलिहलिस्सादि श्रद्धा जंआणवेदिला अ उलंइ तिनिष्क्रांता करुणा स्समस्सदु पि असहीणं खुणामभेत्तकेणावि पिअसहीए भेदवंजदो स्सुदंमए अहिंसा सआसादोजं अत्थि पाहंडाणं वित्तमस्स स्सुदासद्धेति तेणएसा तामसीसद्धाहुविस्सादि शांतिः समाश्वास्य सखिएवमेतत् तथाहि दुराचारासदाचारांदुर्दर्शां प्रियदर्शनां अंबामनुसरत्येषादुराशानकथंचन

५

समाश्वासयतु प्रियसखि नखलुनाममात्रेणापिप्रियसख्याभेतव्यं यतःश्रुतंमयाअहिंसासकाशात्यदस्तिपाखंडानामपितमसः सुताश्रद्धेतितेनएषातामसीश्रद्धाभविष्यति दुराचारेति कीदृशीएषा दुःखदःआचारोयस्यासा कीदृशीमंबांसत् आचारोयस्याः सातां पुनःकथंभूतांदुःखदः दर्शोदिर्शनंयस्याःसा प्रियेआत्मनिदर्शनंयस्यास्तामिसंबाविशेषणं अंबेवांबामातेवहितकारिणीतां एषादुराशाकथंचनकथमपिनानुसरति अतिविलक्षणविशेषवेषत्वादितिभावः ५

सौगतेषु बौद्धविशेषेषु बुद्धागमः बुद्धशास्त्राभिमानिदेवतारूपः उपासकाः नास्तिकदर्शनविचारनिरताः साक्षादिति सैवधीसंततिः विज्ञानसंततिः अधुनाइदानीं निर्गतः विषयोपरागोविषयसंबंधोयस्याः नीलपीताद्यनेकविविधविषयोपप्लवशून्यास्फुरति अनुपहताप्रकाशते अतएवाहंसर्वज्ञोस्मीतिमंतव्यं कस्मात् विगलिताखिलवासनत्वात् विशेषेणगलितानष्टाअखिलाः समस्तावासनाः संस्काराः तेषांभावः तत्वंतस्मात् संसारकारणीभूतवासनोच्छेदाद्विज्ञानसंततिः समुल्लसतीत्यर्थः साका

तद्भवतुतावत्सौगतेष्वसावन्विष्यतां शांतिकरुणेपरिक्रामतः ततः प्रविशतिभिक्षुरूपःपुस्तकहस्तो बुद्धागमः भिक्षुःविचिंत्य भोभोउपासकाः साक्षात्क्षणक्षयिणएवनिरात्मकाश्चयत्रार्पिताबहिरिवप्रतिभांतिभावाः सैवाधुनाविगलिताखिलवासनत्वाद्धीसंततिःस्फुरतिनिर्विषयोपरागा ६ परिक्रम्य पुनःसश्लाघं अहोसाधुरयंसौगतधर्मः यत्रसौख्यंचमोक्षश्च तथाहि आवासोलयनंमनोहरमभिप्रायानुरूपावणिग्भार्यावांछितकालमिष्टमशनंशय्यामृदुप्रस्तराः

यत्रयस्यांधीसंततौ अर्पिताः संपादिताः भावाः घटादयोविषयाः बुद्धौकल्पितत्वादंतर्वर्तिनोपिबहिरिवबाह्याइवप्रतिभांति अभिज्ञायंते भ्रांतेत्यर्थः साक्षान्निःसंदिग्धंक्षणक्षयिणः स्वेतरकालनाशिनः नकेवलंक्षणिकाः निरात्मकाश्चनिरस्तः आत्मास्थितिर्येषांते इदंविशेषणद्वयंभावानामेव अयमेवप्रामाणिकोमार्गोभवद्भिरप्यनुसर्तव्यइतितात्पर्यं ६ यत्रयस्मिन्सौगतधर्मे आवासइति मनोहरं अतिसुंदरंलयनंगृहं आवासोनिवासस्थानं अस्तीत्यध्याहारः नतुक्लेशावहा[illegible]हाः अभिप्रायानुरू[illegible]ाः अभिलषितवेषानुकूलाः वणिग्भार्याः वारविलासिन्यःसंति नतुसवर्णाविवाहिताः वांछितकालं अभिलषितसमयंमिष्टं अशनंभोजनं अस्ति नतुआन्हिकानं

नरकालएवच मृदुप्रस्तराः कोमलास्तरणयुक्ताः शय्याःसंति नकंथादि विल संतीप्रकाशमाना ज्योत्स्ना चंद्रप्रभातयोज्ज्वलाः शोभमानाः रात्रयः क्लृप्तः कृतः अंगरागः अंगकुंकुमचंदनादिलेपोयस्मिन् एतादृशोयउत्सवः काममहोत्सवः स्मर तादिरूपः सैवक्रीडातस्यां आनंदभराः सुखसमूहाः तैर्व्रजंति सुखेनगच्छंतीत्यर्थः कीदृश्योरात्रयः युवतिभिः तरुणीभिः श्रद्धापूर्वं आदरपूर्वंउपासिताः सेविताः अनेनास्माकंभुक्तिमुक्तीसुखसाध्ये अन्येषामतिक्लेशसाध्येइतिभावः ७ करु

श्रद्धापूर्वमुपासितायुवतिभिःक्लृप्तांगरागोत्सवक्रीडानं दभरेर्व्रजंतिविलसज्ज्योत्स्नोज्ज्वलारात्रयः ७ करु णा सहिको एसो तरुणतालतरुप्पलंबोलंबंतकसा अपिसंगचीवरोसुंडिदसचूडमुंडपिंडो इदो जेव्व आ अच्छदि शांतिः सखिबुद्धागमएषः भिक्षुः प्रकाशे भोभोउपासकाभिक्षवश्चश्रूयतांभगवतः सुगतस्य वाक्यामृतं पुस्तकं वाचयति पश्याम्य हंदिव्येनचक्षुषालो कानांसुगतिंदु र्ग- तिंच संस्क्रियंतेक्ष

णिकाःसर्वसंस्काराः नास्त्यात्मास्थायीतस्माद्भिक्षुषुदाराणाक्रमत्सुनेर्षित व्यं चित्तमलंहितद्यदोष्यांनाम नेपथ्याभिमुखमव लोक्य श्रद्धेइतस्तावत् प्रविश्यश्रद्धा

णा सखिकएषतरुणतालतरुप्रलंबोलंबत्कषाय पिशंगचीवरोमुंडितसचूड मुंडपिंडइतएवागच्छति तरुणःप्रगल्भश्चासौतालतरुश्चतद्वत्प्रलंबः उच्चः लंब त्लंबायमानंकषायंसगंधं पिशंगरक्तंचीवरं वस्त्रंयस्यमुंडितःसचूडःसशिखः मुंडरूपः पिंडोयस्य संस्क्रियंतेविषयीक्रियंतेतेसंस्काराः भावाइत्यर्थः स्थायीप रलोकभोक्ता नेर्षितव्यमिति सर्वस्यक्षणिकत्वाद्दूषेर्ष्ययोः परस्परासंसर्गादिति भावः श्रद्धा आज्ञापयतुराजकुलं

श्रद्धा यदाज्ञापयतिराजकुलं करुणा एवमेतत् क्षपणकः दिगंबरसिद्धांतः अरे रेभिक्षकइनस्तावत् किमपिपृच्छामि क्षपणकः अरेमुंचक्रोधंशास्त्रगतंकिमपि पृच्छामि क्षपणकः भणतावत्क्षणविनाशिनात्वयाकस्यकृतेव्रतंधार्यते फलकाले

आणवेदुलाउलं भिक्षुः उपासकान्भिक्षूंश्चचिरमा लिंग्यस्थीयतां श्रद्धा जं आणवेदिलाउलंइतिनिष्क्रां ता शांतिः सखीयमपितामसीश्रद्धा करुणा एव्वं णे दं क्षपणकः भिक्षुमालो क्य उच्चैःशब्दं अलेले भि क्खु अइदो दाव किं वि पुच्छि स्सं भिक्षुः सक्रोधं आःपा पपिशाचाकृतेकिमेवंप्रलप सि क्षपणकः अले मुंच को हं सत्थगदं पुच्छामि भिक्षुः

अरेक्षपणकशास्त्रकथामपिवेत्सि भवतु प्रतीमस्तावत् उपसृत्य किंपृच्छसि क्षपणकः भणदाव खणविणा सिणा तुए कस्स किदे वदं धालिअदि भिक्षुः अरेश्रूय तां अस्मत्संतनितः कश्चिद्विज्ञानक्षणः समुच्छिन्नवा सनोमोक्ष्यते क्षपणकः अले मुक्ख जइ कस्सिं विमण्णं तले कोवि मुक्को भविस्सदि तदो दे संपदं पणट्ठस्स किदे केलिसं उवआलं कलिस्सदि अण्णच्च पुच्छामि केण ईलिसे धम्मो उवदिट्ठे भिक्षुः ननुसर्वज्ञेनभ गवताबुद्धेनोक्तोयमेवधर्मः क्षपणकः

त्वदीयस्थितेरसत्वान्मुधाप्रयासइतिभावः अस्मत्संततनाविति अस्मत्संततौ अस्मद्विज्ञानपरंपरायांपतितःप्रविष्टःकश्चिद्विज्ञानक्षणःप्रवृत्तिविज्ञानसंताना तःपातीसंसारीमोक्ष्यते मुक्तोभविष्यति क्षपणकः अलेमुक्खइति अरेमूर्ख यदिकस्मिन्नपिमन्वंतरेकोपिमुक्तोभविष्यति तदातेसांप्रतंप्रनष्टस्यकृतेकीदृ शमुपकारंकरिष्यति अन्यच्चपृच्छामि केनेदृशोधर्मउपदिष्टः क्षपणकः

अरेसर्वज्ञोबुद्धोस्तीतित्वयाकथंज्ञातं क्षपणकः अरेऋजुबुद्धे यदितस्यभाषितेनसर्वज्ञत्वंप्रतिपद्यसे तदहमपिसर्वंजानामि त्वमपिपितृपितामहैः सार्धं सप्तपुरुषैः सहदासइति क्षपणकः अरेविहारदासीभुजंगदुष्टप्रव्रजितदृष्टांत एषमयादर्शितः विहारदासीभुजंगोवेश्याभर्ता तत्प्रियंतेविस्रब्धं भणामि विस्रब्धंसविश्वासं बुद्धानुशासनंपरित्यज्य अर्हदनुशासनमनुसरन्दिगंबरव्रत

अले सव्वण्णो बुद्धोत्थि त्ति कधं तु ए ण्णादं भिक्षुः ननुरेतदागमैरेवप्रसिद्धो बुद्धः सर्वज्ञः क्षपणकः अले उज्जु अबुद्धिआ जइ तस्स भासिदेण सव्वणत्तणं पडिवज्जोसि ता अहं वि सव्वं जाणामि तुमं वि पिदपिदामहेहिं सद्धं सत्तपुलिसेहिं दासेत्ति भिक्षुः सक्रोधं आःपाप पिशाच मलपंकधरकस्तवाहं दासः क्षपणकः अले विहालदासी भुअंग दुट्ठप्पव जिददिट्ठंदे मए एसे दंसिदे ता पिअं दे विसद्धं भणामि बुद्धाणुसासणं पलिहलिअ अलिहंताणुसासणं अणुसलंते दिअवलव्वदं जेव्वधारेदु भवं भिक्षुकः आः पापस्वयंनष्टः परानपिनाशयितु मिच्छसि स्वाराज्यंप्राज्यमुत्सृज्यलोकनिंद्यामनिंदितः अभिवांछतिकोनाम भवानिवपिशाचतां ८ अपिच आर्हनमपिधर्मवेदनंकःश्रद्धत्ते क्षपणकः गहणरखवत्तवालंचदक्कल्लापला अक्कक्कल्लाइपलमत्थणणणसंवाददंसणेणणिल्लविदं भअवदो सव्वण्णत्तण अलिहंतस्स भिक्षुः विहस्य अरेअनाविभवत्तज्योतिषातींद्रियज्ञानमनारितेन भवतेदमतिकष्टव्रतमाश्रितं

मेवधारयतुभवान् स्वाराज्यमिति कोनामअनिंदितःसन् लोकैरितिशेषः प्राज्यंप्रकृष्टं धातुमूलचिंतालाभबुद्धिपरमार्थचंद्रसूर्यग्रहणसंवाद भोगादिनादशाविधेनसर्वज्ञत्वंप्रकर्षः स्वाराज्यंस्वातंत्र्यंउत्सृज्यत्यक्त्वा भवानिव लोकनिंद्यां शास्त्रविरुद्धांपिशाचतांपिशाचत्वं अभिवांछति अभिलषति नकोपीत्यर्थः ८

आर्हतमतम नुपादेयमित्याह आर्हतमपीति आर्हतमपिधर्मवेदनंधर्मज्ञानंकःश्र
द्धत्तेकःस्वीकरोतिनकोपीत्यर्थः क्षपणकः ग्रहनक्षत्रवारचंद्रसूर्योपरागशक्रराहुपरमार्थज्ञानसंवाददर्शनेननिरूपितंभगवतःसर्वज्ञत्वमर्हतः अरेअनादीति
अनादिप्रवृत्तेन अनादिसिद्धेनज्योतिषाज्योतिःशास्त्रेण अतींद्रियंइंद्रियागो
चरंयतज्ञानंतत्प्रतारितेन भवताकष्टंअतिदुःखावहंव्रतंआश्रितंअंगीकृतमित्य
र्थः देहपरिमितत्वमात्मनोनसर्वज्ञत्वमित्याह तथाहीत्यादिनाज्ञातुमिति वपुः
परिमितः वपुषापरिसमंतान्मितः शरीरमात्रपरिमाणोजीवोविज्ञानरूपःत्रिलो
कींज्ञातुंकथंक्षेमतेइतिकथय नकथमपिसमर्थोभवतीत्यर्थः त्रिलोक्यज्ञानेहेतु

तथाहि ज्ञातुंवपुःपरिमितःक्षमतेत्रिलोकींजीवःक
थंकथयसंगतिमंतरेण शक्नोतिकुंभनिहितःकृशि
खोपिदीपोभावान्प्रकाशयितुमप्युदरेगृहस्य ९
तस्माल्लोकद्वयविरुद्धादार्हतमताद्दूरंकृगतदर्शनं
साक्षात्कूरवावहमतिरमणीयंपश्यामः शांतिः स
खिअन्यतोगच्छावः करुणा एवंभोदुइतिपरि
क्रामतः शांतिः पुरोवलोक्य एष पुरस्तात्सोमसि
द्धांतः भवत्वत्रापितावदनुसरावः

माह संगतिमंतरेणेति संबंधंविनेत्यर्थः तत्प्रतेज्ञानादिसंबंधेमानाभावादितिभावः
उक्तमर्थंदृष्टांतेनद्रढयति कृशिखोपीति अपिशब्दात्कृस्नेहोपिकुंभनिहितःकुंभां
तः प्रक्षिप्तोदीपोगृहस्योदरेमध्येविद्यमानान्भावान्पदार्थान्प्रकाशयितुंनश
क्नोतियथातथास्वप्रकाशोप्यात्माशरीरमध्येवर्तमानः परिच्छिन्नोभुवनांतरवर्ति
नोबहिःस्थान्सूर्यादीन्नैवप्रकाशयेदित्यर्थः एवंविरुद्धमुपपादयता अर्हताभवं-
तोवंचिताइतिभावः आर्हतमतदूषणमुपसंहरति तस्मादिति लोकद्वयविरुद्धादि
हलोकपरलोकयोर्विरुद्धात् दुःखदादिहलोकः कूरवरूपः षोडशवर्षाःस्त्रिय
श्चंदनंकुमनसांमाला अयमेवस्वर्गः इहलोकएवनरकरूपाः आधयोव्याधयश्च

एतद्भिन्नलोकेप्रमाणाभावादितिभावः साक्षात्सुखावहंधर्मनिरपेक्षतयासुख जनकं करुणाएवंभवतु नरास्थिमालेति अहंजगत्पश्यामि कीदृशंजगत् मिथोन्योन्यंभिन्नंपुनरीश्वरादभिन्नं यथामुद्रिकाकंकणादेः परस्परभेदेपिसुवर्णादभिन्नतातथेत्यर्थः कीदृशोहं नरास्थिमालयामहाशंखाक्षमालयाकृतंसंपादितंभूरिभूषणंयेनसः श्मशानेकाश्यांवसतितच्छीलः नृकपालेभोजनंयस्यसः योगएवांजनंतेनशुभ्रं अभ्रांतंदर्शनंज्ञानंयस्यसः एतेनस्वीयव्रतधारणं दर्शितं १० क्षपणकः अरेएषपुरुषः कापालिकव्रतंधारयति तदेनमपिपृच्छामि उपसृत्यसमीपंगत्वा अलेइति अरेरेकापालिकइत्याक्षेपेणनरास्थिमुंडधारक

ततः प्रविशतिकापालिकरूपधारीसोमसिद्धांतः

परिक्रम्य नरास्थिमालाकृतभूरिभूषणः श्मशानवासी नृकपालभोजनः पश्यामि योगांजनशुद्धदर्शनोजगन्मिथोभिन्नमभिन्नमीश्वरात् १० क्षपणकः अले एसो पुलिसो कावालिअव्वदं धालेदि ता णं विपुच्छिस्सं उपसृत्य अलेले कावालिअणरात्थिमुंडधाल अकेलिसे तुह्म धम्मे केलिसे तुह्म मोरखे कापालिकः अरेक्षपणकधर्मतावदस्माकं अवधारय मस्तिष्कान्त्रवसाभिघारितमहामांसाहुतीर्जुह्वतांवन्हौब्रह्मकपालकल्पितसुरापानेननःपारणा

कीदृशस्तवधर्मः कीदृशस्तवमोक्षः धर्मंतावद्वदति मोक्षप्रश्नस्याग्रुक्तत्वाद्धर्मं तावत् आदावेवावधारय निश्चिनुहीत्यर्थः मस्तिष्केति नः अस्माकंब्रह्मकपाले कल्पितासुरानिर्मितंमद्यंतस्याः पानंतेनपारणापुष्टिः भवतीत्यध्याहारः कीदृशानांनः वन्हौअग्नौमस्तिष्केनकपालांतर्वर्तिरसेन अन्त्रामीलितायावसातया अभिघारितानिमहामांसानिमनुष्यमांसानितेषामाहुतीर्जुह्वतांहोमंकुर्वतां किंच नोस्माकंघोरंवोदेवोर्च्यः पूज्यः कैःसाधनैस्तान्याह पुरुषाएवउपहाराः

उपक्रमाबलयोबलिदानरूपाः तैः कथंभूतैः पुरुषोपहारबलिभिः सद्यस्तत्क्षणमे वकृत्तः भिन्नः कठोरोनिष्ठुरः कंठस्तस्माद्विशेषेणगलत्कीलालंरक्तंतस्यधारा भिः उज्ज्वलाः शोभमानास्तैः अथवा नोस्माकंभैरव उमाकांतोर्च्यः देवःस्वप्र काशः कैः पुरिशेतेपुरुषोंतरात्मा तदर्थंउपहाराः समर्प्पणानितएवबलयः तैः कीदृशैः सद्यः तत्क्षणमेवकृत्तकठोरकंठादिवउन्मामितकंठादिवविगलदमृत धाराभिः शोभमानैः मस्तकभवंमस्ति ष्कंरूपंतेनअक्ताकांतिमतीयावसास्ने हः तेनअभिघारिताः सिक्ताः महांत्योविषयेषुप्रवृत्ताबुद्धिवृत्तयः ताएवमांसा- नितेषामाहुतीः अग्नौशिवमूर्तौजुव्हतां शिवार्पणंकुर्वतामित्यर्थः किंचनोऽ

सद्यः कृत्तकठोरकंठविगलत्कीलालधारोज्ज्वलै
रर्च्योनःपुरुषोपहारबलिभिर्देवोमहाभैरवः ११
भिक्षुः कर्णौपिधाय अहोदारुणाधर्मचर्या क्ष
पणकः अलिहंत घोलपावकालिणाकेणा वि वि
प्पलद्धो वराओ कापालिकः सक्रोधं आःपापपा
खंडापसदमुंडितमुंडचूडाचंडालवेषकेशलुंचक
अरेविप्रलंभकः किलचतुर्दशभुवनोत्पत्तिस्थिति
प्रलयप्रवर्तकोवेदांतसिद्धांतप्रसिद्धविभवोभगवा
न्भवानीपतिः दर्शयामस्तर्हिधर्मस्यास्यमहिमा
नं हरिहरसुरज्येष्ठश्रेष्ठान्सुरानहमाहरेवियति
वहतांनक्षत्राणांरुणध्मिगतीरपि

स्याकंब्रह्मरंध्रोपलक्षितः कपालोब्रह्मकपालः तत्रकल्पिताविद्यमानासुराचां द्रीकलातस्याः पानेनपारणाव्रतसमाप्तिः अतएवायंउमयासहितः सोमस्तस्य सिद्धांतः ११ क्षपणकः अर्हन्घोरपापकारिणाकेनापि विप्रलब्धोवराकः विप्रलब्धोधर्माच्च्यावितः पाखंडापसदपाखंडाधमचूडाचंडालवेषकेशोत्पा टककापालिकंप्रतिसतिरस्कारमाह अरेइति अरेइत्यत्रअकारप्रश्लेषः अ- विप्रलंभकः अवंचकः सोमसिद्धांतइतिशेषः यत्रभगवान्कर्तुमकर्तुमन्य- थाकर्तुंसमर्थोभवानीपतिः प्रतिपाद्यतेशेषंस्पष्टं हरिहरेति अहंहरिः विष्णुः हरः महादेवः सुराइंद्रादयः ज्येष्ठाः वयसाज्येष्ठाः सामर्थ्येन श्रेष्ठाः तान्सु-

रान्देवान् आहरे आनये वियति आकाशे वहतां गच्छतां नक्षत्राणां गतीरपि रुण-
ध्मि किंच नगाः पर्वताः नगराणि पत्तनानि तैः सहितामिमां महीं पृथ्वीं अंभः पूर्णां
विधाय उदकपूर्णां कृत्वा ततो यं जलं कलशशकलैः क्षणेन शीघ्रमेव पिबामि भै
रवोपासकानामस्माकं सोमसिद्धांतिनामीदृशः प्रभाव इति भावः १२ क्षपणकः
अरे कापालिक अत एव भणामि केनापींद्रजालिना मायां दर्शयित्वा विप्रलब्धोसी
ति खड्गमाकृष्य कोशान्निःसार्य एनदिति अहं भर्गस्य गृहिणीं महाभैरवीं डमरु

सनगनगरामंभःपूर्णांविधायमहीमिमांकलशशक
लैर्भूयस्तोयंक्षणेनपिबामितत् १२ क्षपणकः अ
लेकाबालिआ अदोजेब्ब भणामि केणा विइंद्द्जा
लिणा मा अंदंसिअ विप्पलद्धे सि त्ति कापालिकः
आःपापपुनरपिपरमेश्वरंऐंद्रजालिकमित्याक्षिप
सि तन्नाकर्णनीयमस्यदौरात्म्यं खड्गमाकृष्य त
दहमस्य एतत्करालकरवालनिकृत्तकंठनालो-
च्छलद्बहलफेनिलबुद्बुदौघैः सार्द्धडमड्डमरुडां
कृतिहूतभूतवर्गेणभर्गगृहिणींरुधिरैर्धिनोमि
१३ इतिखड्गमुद्यच्छति क्षपणकः सभयं महा
भाआ अहिंसा पलमे धम्मो त्थि इतिभिक्षोरंकं
प्रविशति भिक्षुः कापालिकंवारयन् भोभोमहा
भागकौतुकप्रयुक्तेनवाक्कलहेनायुक्तमेतस्मिंस्त
पस्विनिप्रहर्तुं

शब्दं कुर्वन् यो डमरुः वाद्यविशेषः तस्य डांकृतिः डांकरणशब्दः तेन हूतः आ-
हूतो यो भूतवर्गः पिशाचसमूहः तेन सार्द्धं सह रुधिरैः धिनोमि प्रीणयामि की-
दृशैः रुधिरैः एषोयः करालो भयावहः करवालः खड्गः तेन निकृत्तं छिन्नं यत्
कंठनालं तस्मात् उच्छलंत उद्गच्छंतो बहलाः फेनिलाः सफेनाः बुद्बुदौघाः
येषु तैः १३ उद्यच्छति सकंपं दर्शयति क्षपणकः सभयं महाभाग अहिं-
सा परमो धर्मोस्ति प्रतिसंहरति पुनः कोशे प्रक्षिपति महाभाग यदिसंलतयो

ररोषावेशः संवृत्तः ततोहंकिमपिप्रष्टुमिच्छामि क्षपणकः श्रुतोयुष्माकंपरमो धर्मः इत्युपहसति अथकीदृशोमोक्षइतिधर्मंपृष्ट्वामोक्षंपृच्छति अयेति कीदृ शंमोक्षसौख्यं दृष्टंकापीति मृडस्यपत्नीमृडानीउमातस्याः पतिः सोमइत्यूचेव दतिस्म इतीतिकिं चंद्रचूडंचंद्रशेखरं वपुर्यस्यतादृशः सन् सानंदंयथास्या त्तथापार्वत्याः प्रतिरूपयासदृशयादयितयाकांतयाआलिंगितोयः समुक्तः क्रीडतीति सोमेश्वरोपासकानांसरूपामुक्तिरित्यर्थः सोमसिद्धांतइतिभावः ।

कापालिकः खड्गंप्र तिसंहरति क्षपणकः समाश्वास्य महाभा अ जइ संहलिद घो लल्लोसावेस संवुत्तेत दोहं किंवि पिछ्छिदुमि छामि कापालिकः पृच्छ क्षपणकः सुदेतुह्माणं पलमे धम्मे अधकेलि से मोरखे कापालिकः शृणु दृष्टंक्कापि सुखंविना नविषयैरानंदबोधोझ्झिताजीवस्यस्थितिरेवमुक्ति रुपलावस्थाकथंप्रार्थ्यते पार्वत्याःप्रतिरूपयादयि तयासानंदमालिंगितोमुक्तः क्रीडतिचंद्रचूडवपुरि त्यूचेमृडानीपतिः १४ भिक्षुः महाभाग अश्रद्धे यमेतदवीतरागस्यमुक्तिरिति क्षपणकः अलेका वालिअ जइ ण लूससि तदो भणामि सलीलीस लागी मुक्के त्ति वेदविलुद्धं कापालिकः स्वगतं

कथमीदृशं सुखंमोक्षइत्यतआह विषयैस्त्र्यादिभिर्विनासुखंक्कापि नदृष्टं आत्मरूपेसुखेमानाभावादितिभावः ननुतर्हिदुःखनिवृत्तिरेववैशेषिकादि संमतामुक्तिरस्त्वित्यतआह आनंदेति आनंदः सुखंतस्यबोधोऽनुभवस्तेनो ज्झितारहिता जीवस्थितिरेवमुक्तिरुपलावस्था कथंप्रार्थ्यतेकथमभिलष्यते उपलावस्थावदचेतनत्वेनापुरुषार्थत्वादितिभावः ज्ञानित्वंपरित्यज्य पाषा

णपदवीप्रार्थनमत्याश्चर्यंवैदिकत्वाभिमानिनां १४ भिक्षुः अश्रद्धेयंअनादरणीयं क्षपणकः अरेकापालिक यदिनरुष्यसितदाभणामि शरीरीसरागीमुक्तइतिवेदविरुद्धं अश्रद्धयाक्षिप्तं व्याक्षिप्तमित्यर्थः करुणा सखिप्रेक्षस्व २ रजसः सुतांश्रद्धां याएषा विनिद्रनीलोत्पललोललोचनानरास्थिमालाकृतचारुभूषणा नितांतपीनस्तनभारमंथराविभातिपूर्णेंदुमुखीविलासिनी १ भिक्षु-

अये अश्रद्धाक्षिप्तमनयोरंतःकरणं भवत्वेवंतावत् प्रकाशंश्रद्धेइतस्तावत् ततःप्रविशतिकापालिनीरूपधारिणीश्रद्धा करुणा सहि पेख्ख २ रजस्स सुदं सद्धं जा एसा विणिद्दणिलुप्पललोललोअणाणलात्थिमालाकिदचालुभूसणा णिदंबपीणत्थणभालमंथला विह्लादिपुण्णेंदुमुहीविलासिणी श्रद्धा परिक्रम्य एसह्मि आणवेदु सामी कापालिकः प्रियेएनंदुरभिमानिनंभिक्षुंतावत्गृहाण श्रद्धाभिक्षुमालिंगति भिक्षुः जनांतिकं सानंदंपरिष्वज्यरोमांचमभिनीय अहोसुखस्पर्शा कापालिनी तथाहि रंडाः पीनपयोधराःकतिमया चंडानुरागाद्भुजद्वंद्वापीडितपीवरस्तनभरंनोगाढमालिंगिताः बुद्धेभ्यःशतशःशपेयदिपुनःकुत्रापिकापालिकीपीनोत्तुंगकुचावगूहनभवःप्राप्तःप्रमोदोदयः १५

क्षपणकयोरात्मापरिच्छिन्नः आवरणस्वभावानश्रद्धा अतस्तामसी सोमसिद्धांतस्याभिलाषप्रधानत्वाद्राजसीतत्र श्रद्धा एषास्मि आज्ञापयतुस्वामी जनांतिकं लोकसमक्षं रंडाइति मयाचंडानुरागात् उत्कृष्टप्रीतिवशात् गाढंअतिशयेनभुजयोः द्वंद्वेन आपीडितोमर्दितोयः पीवरयोर्मांसलयोः स्तनयोर्भरः भारः सयस्यांक्रियायां यथास्यात्तथा पीनपयोधराः पीनौमांसलौपयोधरौस्त

नीयासांता: रंडाः भर्तृहीनाः निरंतरसुरतहीनाइत्यर्थः एतेनसुखविशेषो ध्वनितः कतिपयसंख्याकाः नोआलिंगिताः किंतुबव्ह्यआलिंगिताएव तावताकिंतत्राह शतशः शतवारंबुद्धेभ्यः गुरुभ्यः शपेगुरुशपथंकरोमि कुत्रापि क्वचिदपिकापालिक्याः पीनोमांसलोउत्तुंगोउच्चोकुचौतयोः अवगूहनंआलिंगनंतस्माद्भवउत्पन्नः प्रमोदोदयः प्रकृष्टानंदाविर्भावः यदिपुनः प्रामइत्यन्वयः एतस्यसुखसंतानस्य अल्पकालस्थायित्वादजातप्रायत्वात्पुनरे

अहोपुण्यंकापालिकचरितं अहोश्लाघ्यःसोमसिद्धांतः आश्चर्योयंधर्मः भोमहाभागसर्वथाबुद्धानुशासनमस्माभिरुत्सृष्टं प्रविष्टाःस्मः पारमेश्वरंसिद्धांतं तदाचार्यस्त्वंशिष्योहंप्रवेशय मांपारमेश्वरींदीक्षां क्षपणकः अले भिरखुआकावालिनी फलसदूसिदे तुमं तादूलं अपसल भिक्षुः आःपापवंचितोसिरेकापालिन्याःपरिरंभमहोत्सवे

न कापालिकः प्रियेक्षपणकंगृहाण कापालिनीक्षपणकमालिंगति क्षपणकः सरोमांचं अहोअलिहंत २ कावालिनीफलसस्हंसंदलिदेहिदाव पुणो अंकपाली स्वगतं

तादृशस्यानुत्पत्तेर्महाजनावंचिताइतिभावः १५ प्रवेशाय देहिपारमेश्वरींपरमेश्वरसंबंधिनीं क्षपणकः अरेभिक्षोकापालिनीस्पर्शदूषितस्त्वंतदूरमपसर परिरंभः आलिंगनंसएवमहान्महोत्सवः क्षपणकः अहोअर्हन् २ इति देवतास्मरणं कापालिनीस्पर्शसुखं संदरिदेहितावत्पुनरंकपालिं अंकपाली आलिंगनं अर्हन्निति देवतास्मरणेनकापालिन्यालिंगनजन्यंसुखंभवान्

वेदनान्यः अरेमहान्खलुइंद्रियविकारउपस्थितः ततोस्तिकोप्युपायः कि-मत्रयुक्तं भवतुपिच्छिकयाच्छादयिष्यामि पिच्छिकामयूरपिच्छनिर्मितः पि च्छगुच्छः अईति अयिपीनघनस्तनशोभनापरित्रस्तकुरंगलोचना यदि रमयसे कापालिनिभावकीतत्किंकरिष्यतिश्रावकीकुरंगोमृगः भावकीश्र-

अले महंते खु इंदिअविआले उवत्थिदे ना अत्थि को विउवाओ किं एत्थ जुत्तं भोदु पिछिआ एदं कि स्सं तधा किन्द्धा अइ पीणघणत्थणसोहणा परि त्तत्थ कुलंगलोअणा जइ लमअसि कावालिणि भावकी ता किं कलिस्सदि सावकी २ अहो काबा लिअ एक्कंदंसणं सोरख मोरख साहणं भोआ चालिअ हग्गे तुझ्झ किंकले संपदं संवुत्ते मं वि महा भेलवाणुसासणे दिरखस्स न्द्धाणेन कापालिकः

उपविश्यतां उभौतथाकुरुतः कापालिकः भा जनंसमादायध्याननाटयति श्रन्द्धा भगवपूरिदं सुराए भाअणं कापालिकः

न्द्धावती श्रावकीक्षपणकगोष्ठी अस्यार्थः हेकापालिनि त्वं भाविकीश्रन्द्धाव तीसती यदिरमयसे तर्हि क्षपणकसमुदायः किंकरिष्यतीतिपदसमुदायार्थः अ होइत्या श्चर्येकापालिकेकंदर्शनंसौख्यमोक्षसाधनं भोआचार्य अहंतवकिं करः दासत्वंमतंसंवृत्तः मामपिभैरवानुशासनेदीक्षस्वध्यानेन उभौभिक्षक्ष

पणको भाजनंसुरापानपात्रं श्रद्धा भगवन्नपूरितंसुरयाभाजनं अर्पणेमंत्रंपठ ति इदमिति भवस्यसंसारस्यनिघ्नोभेषजंइदंभैरवेणोदितंमोक्षंपशूनांजीवा- नांपाशः संसारजनिकायावासनास्तासांसमुच्छेदेनाशेकारणं इतरत्स्पष्टं १६ क्षपणकः अस्माकंअर्हदनुशासनेसुरापानंनास्ति किंविमृशसिकिंविचारयसि पशुत्वंमूर्खत्वंअपनीयतेदूरीक्रियते स्ववक्त्रेआसवंमद्यंतेनपूतांपवित्रांकृत्वाउ

विलोक्य पीत्वा शेषंभिक्षुक्षपणकयोरर्पयति इ दंपवित्रममृतंपीयतांभवभेषजं पशुपाशसमु च्छेदकारणंभैरवोदितं १६ उभौविमृशतः क्षपण कः अह्माणं अलिहंताणुसासणे सुलापाणं ण त्थि भिक्षुः कथंकापालिकोच्छिष्टांसुरांपास्या मि कापालिकः विमृश्यजनांतिकं किंविमृशसि श्रद्धेपशुत्वमनयोर्नाद्याप्यपनीयतेतेनास्मद्वदन संसर्गदोषादपवित्रांसुरामेतौमन्येते तद्भवतीस्व वक्त्रासवपूतांकृत्वाऽनयोरुपनयतु यतस्तैर्थिका अपिवदंतिस्त्रीमुखंतुसदाशुचीति श्रद्धा जंभवं

आणवेदि त्ति पान पात्रंगृहीत्वापीतशे षमुपनयति भिक्षुः महाप्रसादइतिचष कंगृहीत्वापिबति अहोसुरायाःसौं दर्यं निपीतावेश्या भिःसहनकतिवारान्सुवदनामुखोच्छिष्टाऽस्मा भिर्विकचबकुलामोदमधुरा

पनयतुसमीपेप्रापयतु तैर्थिकाःस्मार्ताः श्रद्धा यद्भवानाज्ञापयतीति चषकंपान पात्रं अहोइतिसुरायाः माधुर्यमितिवक्तव्येसौंदर्यमितिवदन्मत्तः प्रलपतीतिभावः निपीतेति अस्माभिर्वेश्याभिःसहकतिवारान्वासरान्सुरेत्यध्याहारः नपीताबहु

धार्पीतैवेत्यर्थः कीदृशीसुरा सुवदनानांसुमुखीनांमुखैरेवरुच्छिष्टापीतशेषा पुनः कीदृशीसुरा विकचंविकसितंयद्बकुलंतस्यामोदेनपरिमलेनमधुरामिष्टा ततः किं तत्राह सुरगणः देवगणः एनांसुरामलब्ध्वा सुधायैस्पृहयतिइच्छतिइतिजानीमः कीदृशींसुरां कापालिन्याः वक्त्रासवेन आननमद्येनसुरभिंसुगंधां १७ अरेभिक्षो मासर्वं पिब कापालिनीवदनसरसांमदिरांममापिधारयस्व वदनसरसांवदनो-

कपालिन्यावक्त्रासवसुरभिमेतांतुमदिरामलब्ध्वा ज्ञानीमः स्पृहयतिसुधायैसुरगणः १७ क्षपणकः अलेभिरखुआ मासब्बं पिब कावालिनीवदणसलसं मदिलं मे वि धालेसु भिक्षुः क्षपणकायचषकमुपनयति क्षपणकः पीत्वा अहो सुलाए महुलत्तणं अहो सादो अहो गंधो अहो सुलहित्तणं चिलं खु अलिहंताणुसासणे पदिदो पडिवंचिदं ह्मि ईदिसेण सुलालसेण अलेभि रखु आ घोणंदि मे अंगाणि ता सुविस्सं भिक्षुः एवंकुर्वतः तथाकुरुतः कापालिकः प्रिये अमोल्यक्रीतं दासद्वयंलब्धं तन्नृत्याव स्तावत् उभेनृत्यतः क्षपणकः अले भिरखु आ एसे कावालिए अहवा आचालिए कावालिणीए सन्दं सोहणं पच्चेदि ताए दाए सन्दं अल्ले विण

च्चामः भिक्षुः एवंकुर्वतः मदस्खलितंनृत्यतः

च्छिष्टांमुखरसयुक्तामित्यर्थः चषकं पानपात्रं क्षपणकः अहोआश्चर्ये सुरायामधुरत्वं अहोस्वादः अहोगंधः अहोसुरभित्वं अहोइत्याश्चर्ये रसांतरासदृशत्वमित्यर्थः चिरंखलु अर्हदनुशासनेपतितः प्रतिवंचितोस्मि ईदृशेनसुरारसेन अरेभिक्षुक घूर्णन्तिममांगानितत्स्वप्स्यामि अरेभिक्षुकएषकापालिकः अथवा

आचार्यः कापालिन्या सार्द्धं शोभनंनृत्यति तदेतयासार्द्धं आवामपिनृत्यावः मदस्खलितंमदेनस्खलितंस्खलनंप्राप्तंयथास्यात्तथानृत्यतः अइपीणघणत्थ णेति पूर्वोक्तांगाथामित्यर्थः यत्रेति अक्लेशंचांद्रायणादितपसाविना अभिम ता अभिलाषिताः अर्थसिद्धयः प्रयोजनसिद्धयइत्यर्थः आश्चर्यमेवाह अत्रानु ज्झितेति अत्राऽस्मन्मते अनुज्झितः अत्यक्तः चक्षुरादीनामिंद्रियाणांविषया स्तेषामासंगः संबंधः तस्मिन्सत्यपि अष्टौमहासिद्धयः अणिमाद्याःसिद्ध्यंति प्राकृताश्चसिद्धयः सिद्ध्यंति प्राप्यंते परंतुविदुषांज्ञानिनांयोगांतरायाः योग- विघ्नभूताभवंतीत्यध्याहारः कीदृशानांविदुषां अत्यासन्नेति निकटश्चासौम

क्षपणकः अइपीणघणत्थणइत्यादिगायति भि क्षुः आचार्यमहाश्चर्यमेतद्दर्शनं यत्राक्लेशमभिम तार्थसिद्धयःसंपद्यंते कापालिकः कियदेतदाश्चर्यं पश्यसि अत्रानुज्झितचक्षुरादिविषयाऽसंगेऽपिसि द्ध्यंत्यभूरत्यासन्नमहोदयप्रणयिनामष्टौमहासिद्ध यः वश्याकर्षविमोहनप्रशमनप्रक्षोभणोच्चाटनप्रा याःप्राकृतसिद्धयस्तुविदुषांयोगांतरायाःपरं १८ क्षपणकः अरेकावालिआ विमृश्य अले आचालि आ अथवा आचालिअ लाअउल आचालिअ भिक्षुः अयमनभ्यासात्सातिशयपीतयामदिरयादूरमुन्म नीकृतस्तपस्वी तत्क्रियतामस्यमदापनयनं कापालि कः एवंभवत्विति स्वमुखोच्छिष्टतांबूलंक्षपणकाय ददाति क्षपणकः स्वस्थीभूय

होदयश्चमोक्षस्तस्मिन्प्रणयः प्रीतिर्येषांतच्छीलास्तेषां कीदृश्यः प्राकृतसिद्धयः वश्यंचवशीकरणं आकर्षः आकर्षणं मोहनंभ्रांत्युत्पादनं प्रशमनंसकलज्ञानभ्रं शः प्रक्षोभणंप्रक्षोभः उच्चाटनं स्थानभ्रंशः तत्प्रायास्तत्प्रधानाइत्यर्थः १८ क्षपणकः अरेकापालिक विमृश्य विचार्य अरे आचार्य अथवा आचार्यराज कुलस्याचार्य भिक्षुः अयमनयेति सातिशयपीतयामदिरया अयमनभ्यास- स्तपस्वी दूरंउन्मनीकृतइतियोजना अतिभ्रांतः संपादितइत्यर्थः क्षपणकः

क्षपणकः आचार्य एवंपृच्छामि यादृशीयुष्माकंस्फुरायामाहरणसिद्धिः किंतादृशीस्त्रीपुरुषेष्वप्यस्ति कापालिकः किंविशेषेण पृच्छसेपश्य विद्याधरीमिति विद्याधरींगंधर्वकन्यांसुरांगनांदेवपत्नीं नागांगनांनागपत्नीं अथयक्षकन्यां अकृत विवाहां स्वयंवरादुपाहरामीतिनन्वित्रं किंतु कृतविवाहादेवपत्न्योप्यानेतुंशक्यत

आचालिआ एव्वं पुच्छामि जादिसी तुह्माणं स्कुला
ए आहलणसिद्धी किं तादिसी इत्थि आपुलिसेस्क
वि अत्थि कापालिकः किंविशेषेणपृच्छसि प
श्य विद्याधरींवाथस्कुरांगनांवानागांगनांवाप्यथय
क्षकन्यां यद्यन्ममेष्टंभुवनत्रयेऽपिविद्याबलात्त
त्तदुपाहरामि १९ क्षपणकः भोएदं मए गणिदेण
ण्णादं जं सव्वे अत्थे महा मोहस्स किंकले त्ति उभो
यथाज्ञातमायुष्मताएवमेतत् क्षपणकः नाला
अकज्जं किं वि मंत्तिअंदु कापालिकः किंतत् क्षप
णकः धम्मस्स स्कुदा सन्द्धा महालाज्जस्स अ
ण्णाए आहलिअदुत्ति कापालिकः कथयक्वासौ
दास्याःपुत्रीएषतामचिरमेवविद्याया बलादुपहरामि

इतिस्फुरांगनेत्यनेनोक्तं नागाः क्रूरास्तेषामपि अंगनांस्त्रियं यक्षास्ततोप्यतिकठिनास्तेषामपिकन्यां किंबहुनाभुवनत्रयेपियद्यन्ममेष्टंतत्तदुपाहरामीतियोजना स्फुकरी १९ क्षपणकः भोः इदंमयागणितेनज्ञातं यत्सर्वेवयंमहामोहस्यकिंकराः क्षपणकः तद्राजकार्यंकिमपिमंत्रयंतु क्षपणकः धर्मस्यस्फुताश्रद्धामहाराजस्याज्ञया आन्हियतामिति

खटिकामादायेति खटिकाअंकलिखनसाधनं अंबागतं श्रद्धाविषयं हताशा नांहतागताआशा येषां तेषां आलापं संभाषणं करुणा सखि एवंकुर्मः णत्थीति नास्तिजले नास्तिस्थले नास्तिगिरिवरे नास्ति पाताले साविष्णुभक्तिसहितावसति

क्षपणकः खटिकामादायगणयति शांतिः सखि अंबागतमिह हताशानामालापंशृणोमि तदवधानेनतावदाकर्णयावः करुणा सहि एवं करेम्ह उभेतथाकुरुतः क्षपणकः णत्थि जले णत्थि थले णत्थि गिलिवले णत्थि पादाले सा विण्हुभत्तिसहिदा वसइ हिदए महाप्पाणं करुणा सानंदं सहि दिट्ठिआ वड्ढसे विण्हुभत्तिए देवीए पस्सपलिवत्तिणी सद्धेति शांतिः सहर्षनाटयति कापालिकः अथधर्मस्य कामादपक्रांतस्यकुत्रवृत्तिः क्षपणकः पुनर्गणयित्वा णत्थिजले इतिपठति कापालिकः सविषादं अहोमहत्कष्टमापतितं महाराजस्य तथाहि मूलंदेवीसिद्धयेविष्णुभक्तिस्तांचश्रद्धानुव्रतासत्वकन्या कामान्मुक्तस्तत्रधर्मोप्यभूच्चेत्सिद्धंमन्येतद्विवेकस्यकृत्यं २०

हृदये महात्मनांकरुणा सखिदिष्ट्यावर्द्धसे दिष्ट्याभाग्येनेत्यर्थः विष्णुभक्त्या देव्याः पार्श्वपरिवर्तिनीश्रद्धेति सहर्षनाटयति हर्षयुक्तंनाट्यं प्रकाशयति णत्थिजलेइति इतिपूर्वोदाहृतांगाथांपठति मूलमिति विष्णुभक्तिर्देवीसिद्धयेबोधोत्पत्तयेमूलंप्रथमंकारणं सत्वकन्याश्रद्धासात्विकीश्रद्धा साचविष्णु

भक्तिं अनुव्रता अनुगतातत्रतयोःसमीपेकामान्मुक्तः कामरहितोधर्मोप्यभूत्
चेत्तदातद्विवेकस्यकृत्यंकार्यंसिद्धंमन्येजातमित्येवमन्येइत्यर्थः निष्कामंकर्म

तथापितावदस्कृव्ययेनापिस्वामिनः प्रयोजनमनुष्ठे
यं तन्महाभैरवींविद्यांधर्मश्रद्धयोपाहरणायप्र
स्थापयामइतिनिष्क्रांताः शांतिः सखिआवामपि
एवंहताशानांव्यवसायंदेव्यैविष्णुभक्त्येनिवेदयाव
इतिनिष्क्रांते इतिपाखंडविडंबनोनामतृतीयोऽकः३

अनुष्ठितां सात्विकश्रद्धावलांविष्णुभक्त्यांतःकरणशुद्धिद्वाराविवेकेनविद्योत्पद्य
तइतिभावः २० अस्कृव्ययेनापिप्राणनाशेनापि व्यवसायंउद्योगं इतिप्रबो
धचंद्रोदयव्याख्यानेतृतीयोंकः समाप्तः ३

# सटीकप्रबोधचंद्रोदयनाटक अंकचतुर्थ

तृतीयें ऽ केपाखंडतिरस्कृतिंविधायेदानींचतुर्थे ऽके पाखंडिप्रेरितमहाभैरवीतः सावधानयाविष्णुभक्त्याश्रद्धाधर्मौरक्षितौइतिसंसूचयन्नाह ततइति मैत्री श्रुतंमयामुदितायाः सकाशात् यथामहाभैरवीग्रसनसंभ्रमात् भगवत्याविष्णुभक्त्यापरित्रातापियसखीश्रद्धेति तदुक्तंठितेनत्हृदयेनप्रियसखींश्रद्धांकुत्रप्रे

ततः प्रविशतिमैत्री मैत्री स्रुदं मए मुदिताए सआसादो जधा महाभैरवी गसणसंभमादो भअवदीए विण्हुभत्तीए परित्तादा पिअसही सद्धे त्तिता उक्कंठिदेण हिअएण पिअसहीं कहिं पेक्खिस्सं परिक्रामति ततः प्रविशतिश्रद्धा श्रद्धा सभयोत्कंपंपठति घोरांनारकपालकुंडलवतींविद्युच्छटांदृष्टिभिर्मुचंतींविकरालमूर्तिमनलज्वालापिशंगैः कचैः दंष्ट्राचंद्रकलांकुरांतरलल्लज्जिह्वांमहाभैरवींपश्यंत्याइवमेमनः कदलिकेवाद्याप्यहोवेपते १

क्षिप्ये ग्रसनसंभ्रमाद्गिलनभयात् उत् उत्कटः कंपोयत्रास्यांक्रियायांयथास्यात्तथा घोरामिति अहोइत्याश्चर्येमेमनः अद्यापिकदलिकेववेपतेकंपते कथंभूताया इवमे महाभैरवींपश्यंत्याइवआलोकयंत्याइव कीदृशींमहाभैरवीं घोरांमहाभयावहां पुनः कीदृशीं नुः इमेनारेचतेकपालेचतेएवकुंडलेविद्येतेयस्याः सातां पुनः कीदृशीं दृष्टिभिः विद्युच्छटांविद्युन्मालांमुंचंतीं दृष्टिभिरिति बहुवचनंत्रिनेत्रत्वे

न पुनः कथंभूतां कचैः विकरालामूर्तिर्यस्यास्तां किंभूतैः कचैः अनलोग्निः न उज्वालावत्पिशंगाः पिंगटास्तैः पुनः कीदृशीं दंष्ट्राएवचंद्रकलांकुराः तदंतरेमध्ये ललंतीरवेलंतीजिव्हायस्यास्तां १ मैत्री अयेएषामेप्रियसखीश्रद्धासंभ्रमोद्भ्रांतहृदया कदलिकाकंपतरलैरंगैः किमपिमंत्रयंती संमुखागतामपि मांन प्रेक्षतेततआलपिष्यामितावत् प्रियसखिश्रद्धेकिमितित्वंउत्तापितहृदयामाम

मैत्री अए एसा मे पिअसही सद्धा भअसंभमुभंतहिदआ कदलिआकंपतरलेहिं अंगेहिं किं वि मंत अंती संमुहागदं वि मंण पेरखदि ता आलविस्सं दाव प्रकाशं पिअसहि सद्धे किं ति तुमं उत्ताविदहिदआ मं विण विलोएसि श्रद्धा विलोक्य सोच्छ्वासं अये मे प्रियसखी मैत्री का

लरात्रिकरालास्यदंतांतर्गतयामया दृष्टासिसखि सैवत्वंपुनरत्रैवजन्मनि २ तदेहिपरिष्वजस्व मैत्री तथाकृत्वा सहितधाविण्हु भत्तीणिभ्भच्छिदप्पहावाए महाभैरवीए कहं दे अज्ज वि वेवंदि अंगाइं श्रद्धा घोरामित्यादिपठति मैत्रीसत्रासं अहो ह दासा घोलदंसणा अधताए आगदाए किंकिदं श्रद्धा श्येनावपातमवपत्यपदह्यमामादायधर्ममपरेणकरेणघोरा

पिनविलोकयसि श्रद्धा स्वदुःखंनिवेदयति कालरात्रीति कालरात्रेरिव करालं भयावहं आस्यंमुखंतस्मिन्मुखेयेदंताः तदंतर्गतयादंतांतः प्रविष्टयामयाहेसखि यात्वंपूर्वं दृष्टासेवत्वं अत्रैवजन्मनि पुनर्दृष्टासि २ मैत्री तथाकृत्वा परिषज्येत्यर्थः सखितयाविष्णुभक्तिनिर्भर्त्सितप्रभावायाः महाभैरव्याः कथंतेअद्यापिवेपंतेअंगानिघोरामित्यादीनि पूर्वोक्तंपद्यमितिशेषः मैत्री अहोहताशा घोरदर्शना अधतया आगतयाकिंकृतं श्येनावपातमिति

साभैरवीश्येनवत् अवउपरिपातः पतनंयत्रयस्यांक्रियायांयथाभवति तथाश्येनाव पातं अवपत्य अस्मदुपरिपतित्वापदद्वयेमां आदायचरणयोर्मध्ये त्वा अपरेणवामे नकरेणधर्ममादायवेगेनशीघ्रंगगनंउत्पतितना उड्डीयगता केवगृध्रीव कीदृशीगृध्री नखानामग्राणितेषांकोटयो अग्रभागास्तेषुस्फुरत्प्रकाशमानंपिशितस्यमांसस्य पिंडयुगंपिंडद्वयंयस्याः ३ मैत्री हाधिक् २ मैत्री ततस्ततः ततःपरमिति अस्म दीयः आर्तोयोनादः तस्मादुपजातायादयातया आर्द्रयाकोमलयादेव्याइत्यर्थः भ्रूभंगेति तयादेव्याविष्णुभक्त्याभ्रुवोभंगः वक्रतातयाभीमः भयानकः सक्रोधो

वेगेनसागगनमुत्पतितानखाग्रकोटिस्फुरत्पिशि तपिंडयुगेवगृध्री ३ मैत्री हन्द्वी हन्द्वी इतिमूर्छति श्रद्धा सखिसमाश्वसिहि २ मैत्री आश्वास्य त दो ३ श्रद्धा ततःपरमस्मदीयार्तनादोपजातदयार्द्र यादेव्या भ्रूभंगभीमपरिपाटलदृष्टिपातमुद्गाढको पकुटिलंचतयाव्यलोकि सावज्रपातहतशैलशि लेवभूमौव्याभग्नजर्जरशिरोस्थियथापपात ४ मैत्री दिट्ठिआ मिइब्व सद्दूल मुहादो विब्भद्दाररवे मेण संजीविदा पि असही मैत्री तदो २ श्रद्धा त तोदेव्यासमुपजाताभिनिवेशमुक्तमेवं महाराज स्यदुरात्मनोमहामोहहतकस्यमामप्यवज्ञायवर्त मानस्यसमूलमुन्मूलनंकरिष्यामीति

वापरिसमंतात्पाटलः श्वेतरक्तः दृष्टिपातोयत्रयस्यांक्रियायांयथास्यात्तथाउ द्गाढो अतिकठिनोयः कोपस्तेनकुटिलंयथास्यात्तथा तेनप्रकारेण व्यलोकि अव लोकितं तथाकथं यथा येनप्रकारेण सा भैरवी भूमौविशेषेण आसमंतात् भग्नंज र्जरंविशीर्णशिरोस्थिशिरः कपालंयस्यांक्रियायांयथास्यात्तथापपात केव वज्र पातेनविद्युत्पातेन हतापतिताशैलस्यपर्वतस्यशिलेव ४ मैत्री दिष्ट्यामृगीवशा र्दूलमुखाद्विभ्रष्टाक्षेमेणसंजीविताप्रियसखी- शार्दूलमुखाद्व्याघ्रमुखात् शार्दू लद्वीपिनोव्याघ्रेइत्यमरः मैत्री ततस्ततः देव्याविष्णुभक्त्यासमुपजातः उत्पन्नः अभिनिवेशः अभिमानोयत्रयस्यांक्रियायांयथास्यात्तथाएवंउक्तं एवंकथंतत्राह

Say

अस्यदुरात्मनइत्यादि दुरात्मनःपापिष्ठस्यमहामोहहतकस्यमहामोहप्रेतस्य अ-
वज्ञायतिरस्कृत्य उन्मूलनं उत्पाटनं आदिष्टेति आज्ञप्तेत्यर्थः देव्याविष्णुभक्त्या
किंविवेकंप्रतिवक्तव्यमित्याह कामक्रोधादीनामिति ततोवैराग्यमिति तेषुकामा
दिषुजितेषुवैराग्यंउत्पद्यते अहंचयथासमयंयथोद्दिष्टकालं प्राणायामादिभिः
आदिशब्दान्नामकीर्तनैः अनुप्राणनेनजीवनेनयुष्मत्सैन्यंतत्वविचारादिरूपं
अनुगृहिष्यामि ऋतंसत्यंभरतिबिभर्तिसाऋतंभराप्रज्ञा पतंजलिनाप्युक्तं ऋतं
भरातत्रप्रज्ञेत्यादि ऋतंभरादयश्चदेव्यः शांत्यादिरूपेणकौशलेनसमीचीनसा
धनेनभगवतःविवेकस्यपरमात्मनः अनुविधास्यंतीति अनुअज्ञानजन्यावरण

आदिष्टाचाहंदेव्यायथागच्छश्रद्धेब्रूहिविवेकं का
मक्रोधादीनांनिर्जयायोद्योगःक्रियतांततोवैराग्यंप्रा
दुर्भविष्यति अहंचयथासमयंप्राणायामाद्यनु
प्राणनेनयुष्मत्सेनां अनुगृहिष्यामि ऋतंभराद
यश्चदेव्यःशांत्यादिकौशलेनउपनिषद्देव्यासंगत
स्यभगवतःप्रबोधोदयमनुविधास्यंति तदहमि
दानींविवेकसन्निधिंप्रस्थिता त्वंपुनःकिमाचरंतीदि
वसानतिवाहयसि मैत्री अह्मेवि विण्हुभत्तीए अ
पणाए चेतस्सो बहिणिआ विवेकसिन्द्धिकालणेण
महाप्पाणं हिदए वसम संस्कृतमाश्रित्य तेहि ध्यायं
तिमांस्फुरिवुनिदुःखिनिचानुकंपांपुण्यक्रियेषुमुदि
तांकुमतावुपेक्षां एवंप्रसादमुपयातिहिरागलोभ
द्वेषादिदोषकलुषोप्ययमंतरात्मा ५

नाशानंतरंविधास्यंतिकरिष्यंतिविपूर्वक्रोधाप्रकरणार्थेवर्तते अहंश्रद्धा मैत्रीवयम
पिविष्णुभक्तेराज्ञयाचतस्रोभगिन्यः विवेकसिन्द्धिकारणेनमहात्मनांहृदयेवसा
महे संस्कृतमाश्रित्यमैत्रीब्रूतेइतिशेषः महात्मनांहृदयेवसामहइत्युक्तंतदाह
तेहिध्यायंतीति तेमहात्मानःस्फुरिवुनिजीवेमांमैत्रींध्यायंति चिंतयंति दुःखिनि
चरागद्वेषइति अनुकंपांकृपांध्यायंति पुण्यक्रियेषुमुदितांसंतुष्टांध्यायंति कुमतौ
कुबुद्धौ उपेक्षांउदासीनतां ध्यायंति एवंसंपादितेतेषांकिंकार्यंसिद्धमतमाह

एवंसति अयमंतरात्माप्रसादं प्रसन्नत्वं उपयाति ननुस्वरसनिर्मलस्य कीदृशी प्रसन्नतानामेत्याशंक्याह रागेति रागलोभद्वेषादिदोषैःकलुषः स्वभावतस्तुनि र्मलइतिभावः ५ तदेवमित्यादि आलोकयतीत्यंतंस्पष्टबोधं प्रियसखीउपनिषत् महाराजंविवेकं राटाइतिअभिधानंनाम यस्यतादृशोजनपदोदेशः परिसरोनिकट प्रदेशः मीमांसानुगताभाट्टमतानुरोधिनीबुद्धिः व्याकुलेनांतरात्मनाउपनिषद्दो

तदेवंचतस्त्रोपिभगिन्योवयंतदभ्युदयव्यापारेणे वब्रासरान्नयामः कुत्रेदानींप्रियसखीमहाराजमा लोकयति श्रद्धा देव्याएतदेवमुक्तं अस्तिराटा- भिधानोजनपदः तत्रभागीरथीपरिसरालंकार भूतेचक्रतीर्थेमीमांसानुगतयामत्याकथंचिद्धा र्यमाणप्राणोव्याकुलेनांतरात्मनाविवेकउपनिष द्देव्याःसंगमार्थंतपस्तपस्यतीति मैत्री तागच्छ दु पि असही अहं विसकं णिआगं अणुचिठ्ठमि श्रद्धा एवंभवतुइतिनिष्क्रांतेविष्कंभकः ततः प्रविशतिराजाप्रतिहारीच राजा आः पापमहा मोहहतकसर्वथाह तस्त्वयायमहाजनः तथाहि शांतेनंतम हिम्निनिर्मलचिदा नंदतरंगावलीनिर्मु क्तेमृतसागरांभसि मनाङ्मग्नोपिनाचामति

विरहादितिभावः मैत्री तद्गच्छतुप्रियसखी अहमपिस्वकंनियोगमनुतिष्ठा मिविष्कंभकः विष्कंभकोनामपूर्वकथासंक्षेपः प्रतिहारीदौवारिकः शांतेइति अयंजनः अमृतंनास्तिमृतंमरणंयत्रतत् अमृतंब्रह्मतदेवसमुद्रजलंतत्रमग्नः आप्लुतोमनागपिस्वल्पमपिनाचामतिनपिबतिनानुभवतीत्यर्थः अन्यसागर जलापेक्षयाविशेषमाह कीदृशेअमृतसागरांभसिशांतेनिरुपद्रवेअन्यत्तुननक्र

शिशुमाराद्युपद्रवात् अनंतोनिःसीमः महिमासामर्थ्यंयस्यतस्मिन् अन्यत्तु गणनीयसामर्थ्यं निर्मलः देहेंद्रियादिविषयमलरहितः चिन्मात्रः ज्ञानरूपः आनंदः सुखंयस्मिन्तरंगाः उच्चावचविकारास्तेषामावलिः पंक्तिः तयानिर्मुक्तेरहिते अन्यस्यसतरंगत्वान्निःसारेनिस्तत्वेकार्यासमर्थत्वात् मृगतृष्णिकामरुमरीचिका तदेवार्णवजलंसागरपानीयंतत्रभ्रांतोमूढः अज्ञः पिबति आचामति अवगाहते अभिरमते मज्जति उन्मज्जति मृगतृष्णारूपसंसारसुखनिपतितो वंचितइतिभावः मृगतृष्णायांइदंजलमितिमत्वाममसेवपानाचमनावगाहनाभिरमणमज्जनोन्मज्जनान्याचरतीति य द्वापिबतीत्यादौपानाद्यनुकूलयत्नवानित्यर्थः तथाचस्थलेचजलभ्रांत्यायुधिष्ठिराधिष्ठितसभायांदुर्योधनस्य

निःसारेमृगतृष्णिकार्णवजलेभ्रांतोविमूढःपिबत्याचामत्यवगाहतेभिरमतेमज्जत्यथोन्मज्जति ६ अथवासंसारचक्रवाहकस्यमहामोहस्याबोधोमूलंतस्यचतत्वावबोधादेवनिवृत्तिः यतः अमुष्य संसारतरोरबोधमूलस्यनोन्मूलविनाशनाय विश्वेश्वराराधनबीजजातात्तत्वावबोधादपरोभ्युपायः ७ प्रायश्चसुकृतिनांव्यवसितेऽर्थेदेवायांति सहायतामितितत्वविदोव्याहरंति तथाचदेव्याविष्णुभक्त्यासंदिष्टंउद्योगःकामादिविजयेक्रियतामिति

पानावगाहनाद्यभावेऽपितदनुकूलयत्नेपिनानुपपत्तिरुत्तरार्द्धेइत्यर्थः ६ पूर्वफक्किकायासुक्तंश्लोकेनाह यतः अमुष्येति अमुष्यइदानीमुपलभ्यमानस्यसंसारतरोः संसारवृक्षस्यअबोधोभावरूपाज्ञानंतदेवमूलंआरंभकंयस्यतादृशस्यउन्मूलनाय विनाशनायसवासनाज्ञानविनाशनायतत्वावबोधात्तत्वसाक्षात्कारात् अपरोअन्यः अभ्युपायः साधनविशेषः नैवअस्तियतोज्ञानमज्ञानस्यघातकमित्युक्तत्वात् किंभूतात्तत्वसाक्षात्कारात् विश्वेश्वरस्यआराधनंसेवनंमननादिरूपंतदेवबीजंकारणंतस्माज्जातस्तस्मात्तच्चेश्वरचोदनाभिव्यक्तान्द्धर्मादेवेतिकणादमुनिनाप्यभाणि ७ अस्मिन्नर्थेदेवाअपिसहकारिणोभवंतीत्याह प्रायश्चेति तथाचदेव्येति देव्याविष्णुभक्त्यासंदिष्टंआज्ञप्तं उद्योगः प्रयत्नः

अहमपिविष्णुभक्तिरपीत्यर्थः तमेववस्तुविचारमेवनिर्जयार्थमितिकामस्येतिशे
षः तावदादौनिर्जयार्थमादिशामिआज्ञापयामि प्रतीहारी यद्देवआज्ञापयतीति
याबेदवतीसैवप्रतीहारी वेदविद्याभिमानिनीदेवतावेदवती विचारान्निर्गतोनिर्वि
चारः विचारशून्योयः सौंदर्याभिमानः तेनवर्द्धिष्णुनाप्रवृद्धिशीलेनकामहतकेन
कामप्रेतेनजगत्विश्वंनिहतंनाशितं अथवेति अतिकुत्सितेसौंदर्यबुद्धिर्महामोह

अहमपिभवदर्थेगृहीतपक्षइतितत्रकामस्तावत्प्र
थमोवीरोवस्तुविचारेणैवजीयतेतद्भवतुतमेवतावन्नि
र्जयार्थमादिशामिवेदवतिआहूयतांवस्तुविचारः प्र
तीहारी जंदेवो आणवेदि इतिनिष्क्रम्यवस्तुविचारे
णसहप्रविशति वस्तुवि
चारः अहोनिर्विचारसौंद
र्याभिमानवर्द्धिष्णुनाका
महतकेननिहतंजगत् अ
थवादुरात्मनामहामोहेनैव
तथाहि कांतेत्युत्पललोच

नेतिविपुलश्रोणीभरेत्युन्नमत्पीनोत्तुंगपयोधरेति
सुमुखांभोजेतिसुभ्रूरिति दृष्ट्वामाद्यतिमोदतेभि
रमतेप्रस्तौतिविद्वानपिप्रत्यक्षाशुचिपुत्रिकांस्त्रिय
महोमोहस्यदुश्चेष्टितं ८ अपिच यथावस्तुविचा
रयतामम्मंदमतीनांपिशितपंकावनद्धास्थिपंजरमयी

साध्येतितात्पर्यं कांतेति अहोआश्चर्यंमोहस्यदुश्चेष्टितमेतत् एतत्किंविद्वान-
पिपंडितोऽपिप्रत्यक्षंअशुचि अपवित्रंमांसादि तस्य पुत्रिकां स्त्रियं दृष्ट्वा संभा-
व्यकांतेतिविशेषणैः इतिप्रस्तौति इतीतिकिं कांतेत्यादि कांतामनोहराउत्पललो
चनाकमलनयना विपुलः स्थूलः श्रोणिभरोनितंबभारोयस्याः उन्नमंतौ मि-
लंतौ पीनौमांसलौउत्तुंगौउच्चौपयोधरौस्तनौयस्याःसा सुष्टुमुखं अंभोजमि
वयस्याःसा सुष्टुभ्रुवौयस्याःसाइति नकेवलंप्रस्तौति किंतु माद्यतिमत्तोभव
तिमोदतेसंतुष्यति अभिरमतेक्रीडति ८ यथेति वस्तुरूपंयथास्तितथाविचार

यतां अमंदमतीनांतीक्ष्णबुद्धीनांपिशितंमांसंतस्यपंकेनकर्द्दमेनावनद्धः संबद्धो योऽस्थिपंजरः तन्मयीतत्प्रधानास्वभावेनदुर्गंधिः बीभत्सः कुत्सितः वेषोयस्याः नारीतिनाम्निविरतिः वैराग्यं अन्यगुणारोपात्तत्रगुणबुद्धि रित्याह तदत्रेति अत्रनार्य्यांइतरगुणाध्यासः अन्यगुणारोपः आरोपहेतुंदर्शयति तथाहि मुक्ता हारेति अहोइतिमहाविनोदे अल्पमतिभिः स्वल्पधीभिः एतन्नार्याकल्पितमिति संबंधः एतत्किंतदाह मुक्तानांहारएवलता,रणंत्यः शब्दंकुर्वंत्यः मणिमयाः रत्न प्रधानाः हेम्नास्वर्णेननिर्मिताः तुलाकोटयः चरणभूषणानिकुंकुमोत्पन्नोरागः अंगरागः स्फुरंत्यः परिमलबहुलाः पुष्पैः विरचिताः विचित्राः नानावर्णाः स्रजः

स्वभावदुर्गंधिर्बीभत्सवेषानारीतिनाम्निविरतिः त दत्रविस्पष्टएवेतरगुणाध्यासः तथाहि मुक्ताहारल तारणन्मणिमयाहेमास्तुलाकोटयोरागःकुंकुम संभवोस्फुरंत्यःपौष्पाविचित्राःस्रजः वासश्चित्र दुकूलमल्पमतिभिर्नार्यामिहोकल्पितंबाह्यांतःपरि पश्यतांतुनिरयंनारीतिनाम्नाकृतम् १ आकाशे आः पापकामचांडालकिमनालंबनमेवाविर्भवता भवताव्याकुलीक्रियतेजनः तथाहि अयमेवमभिमन्यते बालामामियमिच्छतींदुवदनासानंदमुद्वीक्षतेनी लेंदीवरलोचनापृथुकुचोत्पीडंपरीरप्सते

वासः वस्त्र चित्रं नानावर्णं दुकूलंपट्टवस्त्रंएतदीयंसौंदर्यंनार्यामारोपितमित्यर्थः अपूर्वमिदंयत् विशेषादर्शिनामयमारोपोनविशेषंपश्यतामित्याह बाह्येति ब- हिः अंतः अभ्यंतरेनिरयंपरिपश्यतांसमंतादवलोकयतांपुरुषाणांनारीतिनाम्ना कृतंअलंइत्यर्थः १ अनालंबनमेवनिराधानमेव आविर्भवताप्रकटोभवता का मावेशवशादतिव्याकुलोभवतीत्याह तथाहीति अयमेवमिति अयंकामाविष्टः एवंअभिमन्यते एवंकथंतदाह बालेति इयंबालामामिच्छति इयंइंदुवदना चंद्रवदनासानंदंयथास्यात्तथाउद्वीक्षते अवलोकयति इयंनीलेंदीवरलोचना नीलकमलनयनामांपृथुकुचयोरुत्पीडउन्मर्दनंयस्यांक्रियायांयथास्यात्तथाप रीरप्सते आलिंगितुमिच्छति

तंनिरस्करोति अरेमूढेति अरेमूढपशोकान्तामिच्छनिकाचपश्यतिनकापी त्यर्थः तत्रकारणमाह यतोमांसास्थिभिर्निर्मितानारीनकिंचिद्वेदजडत्वात् तर्हिकथंचैतन्योपलंभइत्याशंक्याह अत्रअस्यांनार्यांप्रसिद्धः अमूर्तः मूर्तिरहितः पुमान् साक्षीपश्यति इच्छतिचेत्यपियोजनीयं इच्छतिपश्यतिइत्यत्रे च्छादर्शनयोर्द्रष्टृधर्मत्वात् नारीअप्रयोजिकेति यद्यपितथापिसाक्षिणाईक्ष

अरेमूढ कान्तामिच्छनिकाचपश्यति पशोमांसा स्थिभिर्निर्मितानारीवेदनकिंचिदत्रसपुनःपश्यत्य मूर्तःपुमान् १० प्रतिहारी इदो एदुमहाभाओ इति उभोपरिक्रामतः प्रतिहारी एसोमहाराओउवविट्ठो चिट्ठदि ताउवसप्पदु भवं वस्तुविचारः उपसृत्य जयतु २ देवः एषवस्तुविचारःप्रणमति राजा इहोपविश्यतां वस्तुविचारः उपविश्य देवएषतेकिंकरःसंप्राप्तः आज्ञयानुगृह्यतां राजा महाभागेनसहास्माकंसंप्रवृत्तः संग्रामः तदत्र

कामस्तस्यप्रथमोवीरः तस्यचप्रतिवीरतयाऽस्माभिर्भवान्निरूपितः वस्तुविचारः धन्योस्मियेन स्वामिनाहमेवंसंभावितः राजा अथकयाशस्त्रविद्ययाभवान्कामंजेष्यति वस्तुविचारः आःपंचशरः २ कुसुमधन्वाकामोजेतव्यइत्यत्रापिशस्त्रग्रहणापेक्षा

णात्तस्यांचैतन्यादिकंसर्वसंभाव्यतेइतितात्पर्यं १० प्रतिहारी इतएतुमहाभागः प्रतिहारी एषमहाराजउपविष्टस्तिष्ठतितदुपसर्पतुभवान् संप्रवृत्तः उपक्रांतः प्रतिवीरतयाप्रतिस्पर्धिवीरतयानिरूपितः मनस्यानीतः आः इतिआश्चर्ये

पंचशरइतिवीप्साउपहासार्थं पंचैवशराः बाणाः यस्यपश्यसंमोहनास्त्रमं
त्रिताः पंचापिशराः सकलविजयायालमित्याशंक्याह कुसुमंधनुर्यस्यएता
दृशस्यापिजयेकया शस्त्रविद्ययेतिप्रश्ने आश्चर्यमितिभावः कामविजयो
पायमाहद्दढतरमिति कथंचित्केनापिविहितमार्गेणकाममहमुन्मूलयिष्या
मि इतियोजना किंकृत्वाद्वारंजीवस्यविषयानुध्यानमार्गंजीवोमृगयत्यनेने
तिमार्गस्तंमार्गमंतःकरणमितियावत् आरात्विषयानुध्यानात्पूर्वंद्दढतरंकथं
चित्केनापिविहितमार्गेणापिधायनिरुध्य पुनःकिंकृत्वा योषितांस्त्रीणांस्म
रणमेवविपरिवृत्तिः स्वभावपरावृत्तिः तस्यांसत्यांवादर्शने इंद्रियजन्यज्ञाने
सतिवापरिणतौपरिणामेविरसत्वंवादेहस्यशरीरस्यबीभत्सतांकुत्सिततांवाप्र

पश्य द्दढतरमपिधायद्वारमारात्कथंचित्स्मर
णविपरिवृत्तौदर्शनेयोषितांच परिणतिविरस
त्वंदेहबीभत्सतांवाप्रतिमुहुरनुचिंत्योन्मूलयिष्या
मिकामं ११ राजा साधु २ वयस्य विचारः अपिच
विपुलपुलिनाःकल्लोलिन्योनितांतपतज्झरमसृ
णितशिलाः शैलाःसांद्रद्रुमावनराजयः यदिश
मगिरोवैय्यासिक्योबुधैश्चसमागमःक्वपिशितव
साभक्ष्योनार्यस्तदाक्वचमन्मथः १२ नारीतिनाम
प्रधानमस्त्रंकामस्यतेनतस्यांजितायांतत्सहायाः

तिमुहुः प्रतिक्षणंअनुचिंत्यअनुध्याय एवंकामजयः सुकरइत्यर्थः ११ कामज
योपायंआंतरमुक्त्वाबाह्यमाह अपिच विपुलेति यदिइदंसर्ववर्तते तदाना
र्यांक्व चनतदधीनोमन्मथः कंदर्पः इदंकिंतदाह विपुलेत्यादिविपुलपुलिनाः
विपुलानिप्रशस्तानिपुलिनानितीराणियासांताःकल्लोलिन्यः नद्यः नितांतं
अतिशयेनपतंत्योझरयोर्निर्झराः ताभिः मसृणिताः चिक्कणाः शिलाः येषांते
शैलाश्च सांद्राः निबिडाः द्रुमाः तरवोयासुताः तादृश्योवनराजयः तपोभू
मयएताः एतासुउपविश्य वैय्यासिक्योव्यासप्रणीताः शमगिरः शांतिप्रतिपा
दिकावाचः बुधैः ज्ञातृभिः ज्ञातृचांद्रिसूराबुधाइतिकोशः समागमः संगति
श्चएतत्सत्वेनार्योमन्मथश्चेत्येतद्द्वयमपिनप्रभवतीत्यर्थः कीदृश्योनार्यः पि

शितवसामध्यः मांसवसाप्रधानाः १२ भंगंपराजयं प्रधानाभावेसहायवैफ-ल्यंदर्शयति चंद्रइति इंदुधाम्नाचंद्रकांत्याधवलाः रात्रयः गुंजंतीशब्दायमा नायाद्विरेफावलीषट्पदपंक्तिः तस्याः झंकारेणशब्देनमुखराः सशब्दाः विला सविपिनस्यक्रीडोपवनस्योपांताः प्रांतप्रदेशाः वसंतोदयाः वसंतप्रादुर्भावाः मंद्रध्वानाः गंभीरशब्दाः येघनामेघास्तेषामुदयोयेषुतादृशाः दिवसाः वर्षा

सर्वएवविफलारंभाभंगमासादयिष्यंति तथा हि चंद्रस्पंदनमिंदुधामधवलागुंजद्विरेफावली झंकारोमुखराविलासविपिनोपांतावसंतोदयाः मंद्रध्वानघनोदयाश्चदिवसामंदाः कदंबानिलाःशृं गारप्रमुखाश्चकामसुहृदोनायांजितायांजिताः १३ तदलमतिविलंबेनआदिशतुस्वामी सोहंप्र कीर्णैःपरितोविचारैःशरैरिवोन्मथ्यबलंपरेषाम् सैन्यंकुरूणामिवसिंधुराजंगांडीवधन्वेवनिह न्मिकामं १४ राजा सप्रसादं ततसज्जीभव तुभवान्शत्रुविजयाय वस्तुविचारः यदादिश तिदेवइतिप्रणम्यनिष्क्रां तः राजा वेदवतिक्रोध स्यविजयायक्षमेवआ हूयतां प्रतिहारी जंदेवो आणवेदीतिनिष्क्रम्यक्षमयासहप्रविशति क्षमा

कालीनदिवसाइत्यर्थः मंदाः कदंबसंबंधिनश्चानिलाः वायवः शृंगारः प्रमुखो मुख्योयेषांते आसनपानभोजनादयः कामस्यसुहृदः सहायाज्ञायांजि-तायांसर्वेजिताः १३ सोहमिति सोहंप्रथमंप्रतिज्ञातकामजयः प्रकीर्णैर्वि स्तृतैरनेकरूपैः परितः समंततः शरैरिवविचारैः परेषांमोहाज्ञप्रमिथ्यादृष्टि प्रणीतशास्त्रानुरोधेनप्रवृत्तानांशत्रूणांबलंसैन्यमुन्मथ्यनिराकृत्यकामं अभिलाषंनिहन्मिनिश्चयेननाशयामि तत्रदृष्टांतः यथागांडीवधन्वाअ

र्जुनः शरैः कुरूणांसैन्यंउन्माथ्यविद्राव्यसिंधुराजंजयद्रथंजघिवान्तथेत्यर्थः १४ प्रतिहारी यद्देवआज्ञापयति क्रोधेति धीराः विवेकिनः परस्य अन्यस्य परिवादगिरः निंदावचनानिसहंते कीदृशाः धीराः निष्कंपोनिश्चलश्चासौपयोधिश्चतद्वद्गंभीरा अनवगाहनीयमनसएतादृशाः वीराइववीराः कीदृशास्य परस्यक्रोधरूपोयोंधकारः तेनविकटाउच्चावचायाभ्रुकुटिः क्रोधाहितभ्रूचेष्टासैवतरंगस्तेनभीमस्यभयानकस्य पुनःकीदृशास्य संध्यायांभवाः सांध्याः येकिर-

क्रोधांधकारविकटभ्रुकुटीतरंगभीमस्यसांध्यकिरणारुणरौद्रदृष्टेः निष्कंपनिर्मलपयोधिगभीरवीरा धीराःपरस्यपरिवादगिरःसहंते १५ क्षमा सश्लाघमात्मानंनिर्वर्ण्य क्लमोनवाचांशिरसोनशूलंनचित्ततापोनतनोर्विमर्दः नचापिहिंसादिरनर्थयोगः श्लाघ्यापरंक्रोधजयेऽहमेका १६ उभेपरिक्रामतः प्रतिहारी एसोदेवोताउवसप्पदुपिअसही क्षमा उपसृत्य जयतुजयतुदेवः एषादेवस्यदासीक्षमासाष्टांगपातंप्रणमति राजा क्षमेत्रोपविश्यतां क्षमा उपविश्य आज्ञापयतुदेवः किमर्थमाहूतोदासीजनः राजा अस्मिन् संग्रामेदुरात्माक्रोधस्त्वयाजेतव्यः क्षमा देवस्यानुग्रहान्महामोहमपिजेतुंपर्याप्तास्मि किंपुनःक्रोधंतदनुचरमात्रं तदहमचिरादेव

णाः सूर्यरश्मयः तद्वदरुणारक्तारौद्राभयावहादृष्टिर्यस्यतादृशास्येत्यर्थः १५ सश्लाघंप्रशंसासहितं क्लमोनवाचामिति वाचांक्लमोऽवसादोनशिरसः शूलंपीडानचित्तस्यमनसस्तापः संतापः नतनोः शरीरस्यविमर्दः परस्परगात्रसंघर्षः नहिंसादिः प्राणिमारणादिरनर्थयोगोऽनर्थप्राप्तिरपिन अतोहमेवक्रोधजयेश्लाघ्याप्रशस्या १६ एषदेवः तदुपसर्पतुप्रियसखी क्षमा उपसृत्येत्यादिदेवस्यानुग्रहादि

त्यंतंस्कगमं देवस्यानुग्रहादिति पर्याप्तासमर्थातनौशरीरेन्वरतीतिनन्नुचरः शरीरांतर्वर्तीसितुस्वल्पप्रयत्नसाध्यइत्यर्थः तंपापकारिणमिति अहंतंपापकारिणंक्रोधंविशेषेणनिपातयामि कीदृशंक्रोधं स्वाध्यायः वेदाध्ययनंदेवयज्ञः पितृयज्ञश्च देवपितृयज्ञः ज्योतिष्टोमश्राद्धादितपांसिचचांद्रायणादीनिक्रियानित्यनैमित्तिकाः तासांअकारणबाधितारंकारणंप्रयोजनंविनाबाधितारंविघटितारंविनाशितारं पुनः कीदृशंदृष्टिभिः दृष्टिव्यापारैः स्फुलिंगमिवअग्निकणमिववमंतं काकमिव कात्यायनीदुर्गामहिषमिवमहिषासुरमिव कीदृशंमहिषं पापकारिणं पुनः कीदृशं स्वाध्यायदेवपितृयज्ञक्रियाणांअकारणबाधितारंतुल्योर्थः पुनः कीदृशं दृष्टिभिः स्फुलिंगमिवक्रोधंवमंतंइत्यपियोजनासुसाध्या

(तंपापकारिणमकारणबाधितारंस्वाध्यायदेवपितृयज्ञतपःक्रियाणां क्रोधंस्फुलिंगमिवदृष्टिभिरुद्वमंतंकात्यायनीवमहिषंविनिपातयामि)१७ राजा-क्षमेशरणुमस्तावत्क्रोधविजयोपायं. क्षमा-देवविज्ञापयामि (कुन्द्धेस्मेरमुखावधारणमथाविष्टेप्रसादक्रमोव्याक्रोशेकुशलोक्तिरात्मदुरितच्छेदोत्सवस्ताडने धिग्जंतोरजितात्मनोस्यमहतीदेवादुपेताविपदुर्वारेतिदयारसार्द्रमनसांक्रोधस्यकुत्रोदयः १८ राजा साधु २ क्षमा

१७ कुन्द्धेस्मेरमुखेति इतिअनेनप्रकारेणदयैवरसः संतोषः रसोजलंरसोहर्षोरिसः शृंगारइत्यपीत्यनेकार्थध्वनिमंजरी तेनआर्द्रमनोयेषांतेदयारसार्द्रमनसः तेषांपुरुषाणांक्रोधस्यउदयः उत्पत्तिः कुत्रनकुत्रापीत्यर्थः इतिकिं अस्याजितात्मनः नजितः आत्मामनोयेनतस्यजंतोः प्राणिनः दैवात् अदृष्टवशात्दुर्वारादुःखेनवार्यतेदुर्वारा अतएवमहतीआपत्विपत्तिः उपेताप्राप्तेति उपायांतरमाह क्रुद्धेउत्पन्नक्रोधेजनेस्मेरंहास्यंतद्युक्तंमुखंतेनावधारणंस्फुरवबुद्ध्यानिरूपणंधन्योहंयन्मय्यसौकुप्यतीति अथआविष्टेक्रोधावेशेसतिप्रसादक्रमः क्षम्यतांमहाप्रसादइति व्याक्रोशेगालिप्रदानेकुशलोक्तिः आशीर्वादोयमेवसाधुवयमीदृशाएवेत्यादि ताडनेआत्मनोदुरितस्योच्छेदे ननाशेनोत्सवः संतोषः देव

क्रोधस्येतिहिंसादयः क्रोधमूलाएवेतिभावः १८ प्रतिहारी यद्देवआज्ञापयतीति
सानुक्रोशंसदयं फलमिति वनंवनंइतिप्रतिवनं क्षितेोरुहांतितेक्षितिरुहाः वृक्षास्ते
षांफलं जातावेकवचनं बिल्वबदरादिअखेदंयथास्यात्तथा स्खेनस्वेच्छालभ्यंइ
च्छामात्रप्राप्यंइत्यर्थः स्थानेस्थानेस्थलेस्थलेशिशिरंशीतलंमधुरंमिष्टंपुण्याः गं
गायमुनादयः सरितोनद्यः तासांपयः पानीयंस्वेच्छालभ्यंइतियोजनीयं मृदुःको
मलःस्पर्शोयस्याःसा स्फ ललिताःसुंदराश्चता लताश्च तासांपल्लवास्तन्

देवक्रोधस्यविजयादेवहिंसापारुष्यमानमात्सर्याद
योऽपिविजिताएवभविष्यंति राजा तत्प्रतिष्ठतां
भवतीविजयाय क्षमा यदाज्ञापयतिदेवइतिनिष्क्रां
ता राजा प्रतिहारीं प्रतिवेदवति आहूयतांलोभस्य
जेतासंतोषः प्रतिहारी जंदेवोआणवेदीतिनिष्क्रम्य

संतोषेणसहप्रविशति
संतोषः-विचिंत्य सानुक्रो
शं (फलंस्वेच्छालभ्यंप्रति
वनमखेदंक्षितिरुहांपयः
स्थानेस्थानेशिशिरमधुरं
पुण्यसरितां मृदुस्पर्शा
शयास्फललितलतापल्लव
मयीसहंतेसंतापंतदपिधनिनांद्वारिकृपणाः १९
आकाशे अरेमूर्खलुब्धदुरुच्छेदःखल्वयंभवतो
व्यामोहः तथाहि (समारंभाभग्नाःकतिकतिनवारांस्त
वपशोपिपासोस्तुच्छेऽस्मिन्द्रविणमृगतृष्णार्णवजले

प्रचुराःपल्लवमयीशय्यास्वेच्छालभ्या अर्थवशाद्विभक्तिव्यत्यासः एवंयद्यपिपदार्थमा
त्रिसौलभ्यमस्तितदपितथापिकृपणाःदीनाः धनिनांद्वारिसंतापदुःखंसहंते अनुभवं
तीतिमहदाश्चर्यं अमुमर्थंश्रीमद्भागवतेश्रीशुकआविश्चकारचीराणिकिंपथिनसं
तीत्यादिना १९ पुनरपिलुब्धंनिरस्करोति अरेमूर्खेति भवतोलोभासक्तस्य स-
मारंभाइति हेपशोविवेकविधुरत्वंकतिकियत्संख्याकाः समारंभाउपक्रमाः कति-

वारान्भग्नाः ननष्टाः अपितुभग्नाएव पश्चात्तमेवविशदयति कीदृशस्यतव अ-
स्मिन्तुच्छेतिक्षुद्रेद्रविणरूपेधनरूपेयन्मृगतृष्णामरीचिकातदेवार्णवजलंसा-
गरजलंतस्मिन्तादृशेसंबादलेशशून्ये ऽपिजलेपिपासोः पातुमिच्छोः किंच हे
मूढ तथापिसमारंभनाशो ऽ पितेतवप्रत्याशाप्रचुरेच्छा अद्यापिनविरमतिनोपरम
ते एवंविमर्शेक्रियमाणेइतिप्रतिभातीत्याह यत्चेतो ऽतःकरणं अद्यापिशतधान
विदीर्णंनिस्फुटितंतत्चेतोनियतंनिश्चयेन अशनिग्रावभिः वज्रोपलैः घटितंनि
र्मितमित्यर्थः २० चमत्कारमाश्चर्यं लभ्यमिति मुग्धःसन् अनारतंनिरंतरंसर्व
देवलभ्यंलब्धुंशक्यंयत्तल्लब्धंप्राप्तं इदंच अधिकंलभ्यंलब्धुंशक्यंतस्मादेवमूल

तथापिप्रत्याशाविरमतिनतेमूढशतधाविदीर्णंयच्चे
तोनियतमशनिग्रावघटितं २० इदंतेलोभांधस्यचे
ष्टितंचेतसिचमत्कारमातनोति यतः लभ्यंलब्धमि
दंचलभ्यमधिकंतन्मूललभ्यंततोलब्धंचापरमित्यना
रतमहोमुग्धोधनंध्यायसि नैतद्वेत्सिपुनर्भवंतमचि
राद्राशापिशाचीबलात्सर्वग्रासमियं ग्रसिष्यतिम
हालोभांधकारावृतं २१ अपिच धनंतावल्लब्धंक
थमपितथाप्यस्यनियतंविनाशेनाशेवातवसतिवि
योगोस्त्युभयथा अनुत्पादःश्रेयान्किंमुकथयप
थ्योर्थविलयोविनाशोलब्धस्यव्यथयतितरांनत्वनुद
यः २२ किंच

धनाल्लभ्यंप्राप्तव्यंवृद्धिरूपं ततोवृद्धिरूपधनात् अपरंकालवृद्ध्याख्यं लब्धंप्राप्तं
इतिएवंप्रकारेणध्यायसिधनंधनमितिपरंतुत्वमेवतन्नवेत्सियद्भवंतमेवप्रत्याशापिशा
चीबलाद्धठात्सर्वग्रासंयथास्यात्तथा अचिरात् झटित्येवग्रसिष्यतिगिलिष्यतीति
कीदृशंभवंतं महालोभएवअंधकारस्तेनआवृतंव्याप्तं २१ धनार्जनमतिक्लेशसा
ध्यमित्युपपाद्यतद्रक्षणमपि अतीवदुष्करमित्याह अपिच धनंतावदिति कथम
पिमहताकष्टेनतावत्प्रथमतः धनंलब्धंप्राप्तं तथापि अस्यधनस्यविशेषेणनाशे
युगपत् क्षयेसतिनाशेवाक्रमेण अपगमेसतिउभयथापिनियतंनियमेनतववियोगः
विरहः अस्ति ततः किंतत्राह अनुत्पादइति किंमुप्रश्ने अनुत्पादः श्रेयान् अनुत्प

न्तिः श्रेयस्करी अथ अथवाविलयोविनाशःपथ्यःश्रेयस्करः एनत्कथयब्रूहि वि-
चारेखेवमस्तीत्याह लब्धस्यशमस्यविनाशः व्यथयतितरां अतिशयेनपीडयती
त्यर्थः नखनुदयःनखनुत्पादः उत्पत्त्यभावेलोकस्यनतथापीडेत्यर्थः २२ धनादि
रक्तस्यकथंसुखमित्याशंक्याह किंचमृत्युरिति मृत्युःशश्वन्निरंतरंमूर्ध्निमस्तके
शिरस्येवमाद्यतिद्दृष्यति घोराभयावहा जरावार्द्धकंतद्रूपिणीउरगीसर्पिणी
एषाअतिप्रसिद्धा त्वांग्रसतेगिलतिनकेवलंत्वामेवग्रसते अपितुपरिग्रहाःस्त्रीपु-

मृत्युर्माद्यतिमूर्ध्निशश्वदुरगीघोराजरारूपिणीत्वा
मेषाग्रसतेपरिग्रहमयैर्गृध्रैर्जगद्धस्यते धूत्वाबोध
जलैरबोधबहुलंतल्लोभजन्यं रजःसंतोषामृतसाग
रांभसिमनाङ्मग्नःसुखंजीवति २३ प्रतिहारी एसो
सामीता उवसप्पदु महाभाओ तथाकृत्वा संतोषः
जयतु २ स्वामी एष
संतोषः प्रणमति
राजा इहोपविश्य
तामितिस्वसन्नि
धावुपवेशयति सं-
तोषः सविनयमुप
विश्यएषप्रेष्यजनः

आज्ञाप्यतांदेवेन राजा विदितप्रभावएवभवान्
तदलमत्रविलंबेनलोभंजेतुंवाराणसींप्रतिप्रतिष्ठी
यतां संतोषः यदाज्ञापयतिदेवः

त्रादयस्तन्मयैर्गृध्रैः मांसभक्षकैः पक्षिभिर्जगदिदंग्रस्यते एवंसतिकिंविधेयं
तत्राह बोधजलैर्ज्ञानजलैरबोधेनाज्ञानेनबहुलंबहुतत्पूर्वोक्तंलोभेनजन्यंर-
जः धूत्वाप्रक्षाल्यसंतोषएवामृतसागरांभस्तत्रमनाक्क्षणमात्रंमग्नः आप्लुतःसु
खंजीवतितिष्ठतीत्यर्थः २३ प्रतिहारी एषस्वामीतदुपसर्पतुमहाभागः स्वस
न्निधौस्वसमीपे अनेनवक्तृविचारक्षमयोरांतरंगः संतोषइतिध्वनितं सोहमि-
त्यंतंस्फुटार्थं राज्ञोनिकटेस्वसामर्थ्यंदर्शयति

सोहं नानेति सोहंविख्यातविभवः संतोषः तरसाबलेन प्रसह्यपराभूयनिर्जित्य अवशंव्यापारशून्यंविकलमितियावत्लोभंपिनष्मि संचूर्णयामि कः कमिवदाशरथिः श्रीजानकीपतिः बलेनपरिभूय जित्वाअवशं रक्षोधिनाथंरावणमिव कीदृशंलोभंरावणंच लोभपक्षेनानाबहूनिसुखानिद्वाराणियस्यतं रावणपक्षेनानाअनेकानिमुखानियस्यतंदशवदनत्वात् त्रयाणांजगतांविजयिनंजयशीलंपक्षद्वयेतुल्यंस्पष्टंच पुनः कीदृशं देवाश्चद्विजातयश्चब्राह्मणाः तेषांबधः मारणंबंधनंचतेन लब्धावृद्धिर्येनतं अन्यायलब्धधनस्ययादृशीगतिस्तादृशीलोभस्यापिगतिरि

सोहं नानासुखंविजयिनंजगतांत्रयाणांदेवद्विजाति बधबंधनलब्धवृद्धिं रक्षोधिनाथमिवदाशरथिःप्र सह्यनिर्जित्यलोभमवशंतरसापिनष्मि २४ इति निष्क्रांतः प्रविश्य विनीतवेषः पुरुषः देवसंभृतानि विजयप्रयाणमंगलानि प्रत्यासन्नश्चमौहूर्तिकावेदि तः प्रस्थानसमयः राजा यद्येवंसेनाप्रस्थानाया दिश्यंतांसेनापतयः पु रुषः-यदाज्ञापयतिदेव इतिनिष्क्रांतः नेपथ्ये सज्जंतांकुंभभित्तिच्यु तमदमदिरामत्तभृंगाःक

रींद्रायुज्यंतांस्यंदनेषुप्रसभजितमरुच्चंडवेगास्तुरंगाः

तिभावः २४ संभृतानिसज्जसिद्धानिविजयार्थप्रयाणायमंगलानिकन्यादर्शदध्यादीनि प्रत्यासन्नः निकटवर्ती मौहूर्त्तिकावेदितः ज्योतिर्विदाविष्टः प्रस्थानसमयः विजययात्रासमयः सज्जंतामिति करींद्राः हस्तींद्राः सज्जंतांसपल्याणाः क्रियंतां कीदृशाः करींद्राः कुंभभित्तेर्गंडफलकात्च्युतास्रतानासौमदमदिराचमदद्रवश्चतेनमत्ताः भृंगाः येषुते तुरंगाः अश्वाः स्यंदनेषुरथेषुयुज्यंतांबध्यंतां कीदृशास्तुरंगाः प्रसभं अतिशयेनजितः मरुतोवायोश्चंडः अतिशयितः वेगोयेस्ते

पादाताः पत्तयः संचरंतु अग्रेगच्छंतु कीदृशाः पादाताः ककुभांदिशामंतरालेमध्ये
कुंतैः प्रासैः आयुधविशेषैः नीलोत्पलानांवनमिवसृजंतः कुर्वंतः अश्ववाराअश्वसादिनः
प्रसभमतिशयेनसंचरंतुगच्छंतु कीदृशाः अश्ववाराः असिभिः खड्गैः लसंतः शोभंतः
पाणयोहस्ताः येषांतेइतिबाह्योर्थः अथाभ्यंतरः कुंभः कुंभकाख्यप्राणायामः सएव
भित्तिरिवभित्तिः इंद्रियाधारत्वात्तस्याः च्युतोमदएव मदिरातयामत्ताः लुप्तविषयस्मृ
तयः भृंगाइवभृंगाः इंद्रियाणिविषयरसलुब्धत्वाद्भृंगसाम्यमिंद्रियाणांसज्ज्यंतांस्वा
यत्तानिक्रियंतां करींद्राइवकरींद्राः प्राणादिवायवः सज्ज्यंतांआयत्ताः क्रियंतां एतदु
क्तंभवतिप्राणादिनियमेनदोषक्षयइति तथोक्तं दह्यंतेध्मायमानानांधातूनांतुयथा
मलाः तथेंद्रियाणांदह्यंतेदोषाःप्राणस्यनिग्रहादिति तुरंशीघ्रंगच्छंतितेतुरंगाः शरी

कुंतैर्नीलोत्पलानांवनमिवककुभामंतरालेसृजंतःपादा
ताःसंचरंतुप्रसभमसिलसत्पाणयोथाश्ववाराः ३५
राजा भवतुकृतमंगलाःप्रतिष्ठामहे पारिपार्श्वकंप्र

ति सारथिरादिश्यतांसांग्रा
मिकंरथंसज्जीकृत्वोपनये
ति पारिपार्श्विकः यदाज्ञा
पयतिदेवइतिनिष्क्रांतः त
तःप्रविशतियथोक्तंरथमा
दायसारथिः

रांतर्वर्त्तिमुख्यधमनीसंचारिणोवायवः स्यंदनेषुदेहेषुवर्त्तमानाः संयुज्यंतांसमाधीयं
तांयथेष्टसंचारविधुराःक्रियंतां कीदृशाःवायवः प्रसभंहठाज्जितःपराभूतः असुरव्य
धमनीसंचारिणांमरुतांचंडउग्रोवेगोयैस्ते एवंजितेषुवायुषुशारीरशुद्धिर्भवतीतिभावः
पदंपदमतंतिसततंगच्छंतीतिपदातयः तेषांसमूहाःपादाताः ब्रह्मवासनाविशेषाः कुंतैःअ
विद्याप्रहरणैः नीलोत्पलानांवनमिवककुभांदिशां अष्टदलहृदयपुंडरीकदलानांमध्येत
त्वंप्रकाशयंतः संचरंतु अथेत्यवधारणे अश्ववाराःअश्वाःप्रकाशरश्मयःतान्वारयंति प्र-
कोष्ठेषुप्रापयंतितेअश्ववाराःसुषुम्नायांसंचारमार्गाःसंचरंतुनियम्यंतां तत्रदृष्टांतः असिल
सत्पाणयइवदृष्टंलोकेखड्गहस्तानियंतारोभवंतीति अनेनचित्तस्थैर्यमुक्तं उक्तंच सुषु
म्नायाएकत्रनियमनंमनसःस्थैर्यहेतुरिति एवंअन्यत्रापिऊह्यं ३५ पारिपार्श्वकंपार्श्वव

रंसेवकं सांग्रामिकंसंग्रामेयोग्यं पारिपार्श्वकइत्याद्यायुष्मन्नित्यंतंस्फुगमं उन्द्भूते ति एतेवाहाः वहंतितेवाहाः अश्वाः गगनसीम्नि अंतरिक्षेरथंवहंतिनयंति कीदृशावाहाः उन्द्भूतंउच्चलितंयत्पांसुपटलंधूलिसमूहः तेनअनुमितोज्ञातोयः प्रबंधो गतिसंतानस्तेनधावताखुराग्रचयेनखुराग्रसमुदायेनचुंबितः स्पृष्टः भूमिभागोयैस्ते कीदृशंरथं निर्मथ्यमानोयोजलधिःसमुद्रः तस्ययोध्वनिः तद्वत्

देवएषसज्जीकृतोरथः तदारोहत्वायुष्मान् राजा

कृतमंगलविधीरथाधिरोहणंनाटयति सारथीर थवेगंनिरूपयित्वा आयुष्मन्पश्यपश्य उन्द्भूत पांसुपटलानुमितप्रबंधधावत्खुराग्रचयचुंबित भूमिभागाः निर्मथ्यमानजलधिध्वनिधीरघोष मेतेरथंगगनसीम्निवहंतिवाहाः २६ इयंचनाति दूरेदर्शनपथमवतीर्णात्रिभुवनपावनीवाराणसी नामनगरी

घोरोभयावहोघोषः शब्दोयस्यतं आंतरोर्थः एतेप्राणाःवहंतिधारयंति रथमिव रथंशरीरंगगनसीम्नि अंतरिक्षेलघिम्नाघोरोजीवितदारिइत्यादिलुप्तोपमयासर्व योजनीयंविस्तारभयान्नेहप्रपंच्यते २६ दर्शनपथमवतीर्णादृष्टिमार्गगोचरा त्रिभुवनपावनीति मर्त्यानांस्नानदर्शनपानादिभिः देवानांनागानांचमनुष्यशरीर ग्रहणेनचेतित्रिभुवनपावनीत्युक्तं देवानांनागानांचस्वशरीरेणधर्मोत्पादकत्वाभावात्

वाराणसींवर्णयति अमीधारेति अमीसंमुखेवर्तमानाः सौधशिखराः गृहोपरिभा
गाः भूयः बाहुल्येनविभाव्यंतेदृश्यंते कीदृशाः सौधशिखराः धारायंत्रभ्यः स्वल
न्निर्गच्छद्यज्जलंतस्ययोझंकारः शब्दविशेषः तेनमुखराः सशब्दाः पुनः कीदृशा
सौधशिखराः शशिकरान्मुष्णंतिचोरयंतितेशशिकरवत्रुक्दीप्तिर्येषांते इतिवापा
ठः सुधाधवलाइत्यर्थः यत्रयेषुसौधशिखरेषुइयंउपलभ्यमानाविचित्रानानाव
र्णापताकानामावलिः पंक्तिः उच्चैः अतिशयेनशरदिअमलानिर्मला येमेघास्तेषामंते
मध्येविलसंतीचमत्कारं आविष्कुर्वंतीयातडिद्विद्युल्लतातस्याः लेखारेखातस्याः ल
क्ष्मींशोभांवितरतिविस्तारयति सौधमेघयोस्तडित्पताकयोश्च उपमानोपमेयभावः

अमीधारायंत्रस्खलितजलझंकारमुखराविभाव्यं
तेभूयःशशिकररुचःसौधशिखराः विचित्रायत्रो
च्चैःशरदमलमेघांतविलसत्तडिल्लेखालक्ष्मींवितर
तिपताकावलिरियं २७ एताश्चमतिमुकुलंलग्नमधु
पावलिरणितमुखराज्जृंभारंभभरविगलन्मकरं
ददुर्दिनाःकुसुमसुरभयोनातिदूरेश्यामायमाना
नवघनच्छायतरवोनगरपर्यंतोद्यानभूमयः यत्रै
तेमरुतोऽपिगृहीतपाशुपतव्रताधूलिमुन्दूलयंत
स्तापसाइवलक्ष्यंते तथाहि तोयार्द्राःसुरसरितः
सिताःपरागैरर्चंतश्चकनकुसुमैरिवेंदुमौलिम्

एताश्चेति एताः नगरस्यवाराणसीनाम्नः पर्यंतेषुप्रांतेषुउद्यानभूमयः उपवनप्र
देशाः नातिदूरे अतिनिकटेदृश्यंतेइत्यध्याहारः कीदृश्यउद्यानभूमयः मुकुलंमुकु
लंमतीतिमतिमुकुलंमतिकोशंलग्नायेमधुपास्तेषामावलिः पंक्तिस्तस्याः रणितेनश
ब्दितेनमुखराः वाचालाः जृंभोविकासस्तस्यारंभउत्पत्तिस्तस्याः भरअतिशयः
अर्थात्कुसुमानांविकासातिशयः तस्माद्विगलन्भिः स्रवन्योमकरंदः पुष्परसस्तेन
दुर्दिनंयासुताः दृष्टिमत्यइत्यर्थः पुनःकीदृश्यः कुसुमैःसुरभयः सुपरिम
लाः श्यामायमानाः नीलवर्णाः घनच्छायानिबिडच्छायास्तरवोयासुताः मरुतो
वायवः गृहीतंपाशुपतव्रतंयैस्तेसर्वदाधूलिंउन्दूलयंतः प्रचंडाइतिभावः तदेव
दर्शयति तथाहि तोयार्द्राइति समीराः वायवः प्रकर्षेणचलाः चंचलाः लताःताए

वभुजाः तैर्नृत्यंतिनृत्यंकुर्वंति तापसाःपाशुपताअपिएवंनृत्यंतीतिभावः कीदृ
शावायवस्तापसाश्च सुरसरितः गंगायास्तोयेन आर्द्राः कृतजान्हवीमज्जनाः पुनः
परागैः कुसुमरजोभिः सिताः युक्ताःवायवः षिञ्बंधनेइत्यस्यसिताइतिरूपं प
रागैः विभूतिरजोभिः सिताःधवलाः तापसाः च्युतकुसुमैः स्वयमेवपतितैः पुष्पैः इं
दुमौलिंशंकरं अर्चंतिः पूजयंतइव पुनः मधुपरुतैः भ्रमरशब्दैः प्रोद्गीतांउच्चैर्गीय
मानांस्तुतिंपठंतोवायवस्तापसाश्चमधुपानामिवरुतानितैः प्रकर्षेणतालस्वरता
नादिरूपेणउद्गीतांगानक्रमवतींस्तुतिंपठंतइत्यर्थः अचाक्षुषेवायौइदंनोपपद्यत
इतिचेदारोपेणाप्युपपत्तेरितिसमाधेयं सरंतिमरुतोस्यामितिसरित्ब्रह्मनाडी
त्याद्यध्यात्मसूक्ष्यं २८ सैषांनर्दधतीति साएषाचंद्रचूडस्यमहादेवस्यवसतिः

प्रोद्गीतांमधुपरुतैःस्तुतिंपठंतोनृत्यंतिप्रचलल
ताभुजैःसमीराः २८ राजा सानंदंविलोक्य
सैषांतर्दधतीतमोविघटनादानंदमात्मप्रभंचेतः
कर्षतिचंद्रचूडवसतिर्विद्येवमुक्तेःपदम् भूमेः
कंठविलंबिनीवकुटिलामुक्तावलीजान्हवीयत्र
यंहसतीवफेनपटलैर्वक्रांकलामैंदवीं २९ सूतः
परिक्रम्य आयुष्मन्नृपश्यपश्य इदंतत्सुरस
रित्परिसरालंकारभूतंभगवतः पावनमनादेरा
दिकेशवस्यविष्णोरायतनं राजा सहर्षं अये

काशीचेतोमनः आकर्षतिवशीकरोतीत्यर्थः कीदृशीकाशी अंतस्तमोविघट
नात्अज्ञानविनाशात्स्वप्रभं आत्मप्रकाशमानंदंदधतीप्रकाशयंती पुनःकीदृ
शी मुक्तेःपद्यतेप्राप्यतेअनेनेतिपदंकारणमित्यर्थः केवविद्येव ब्रह्मात्मैकत्व
ज्ञानमिव तदपि अज्ञानंविनाश्यस्वप्रकाशमानंदंप्रकटयन्मुक्तिहेतुरितितत्र
दृष्टांतः साका यत्रयस्यांकाश्यांइयंजान्हवीगंगावक्रामैंदवींकलांअर्धचंद्राका
रांचंद्रकलांफेनपटलैः फेनसमूहैः हसतीव उत्प्रेक्षतेकथंभूतेव भूमेःकंठवि
लंबिनीकंठेलंबमानाकुटिलास्वभावतःमुक्तावलीवमुक्तामालेव मुक्तावली
साम्यंस्वच्छतयेतिवेदितव्यं एषाब्रह्मनाडीअंतर्हृदयकमलेचेतोवशीकरो-
तीति आभ्यंतरसूत्यंशेषंसुगमं २९ सूतःसारथिः इदंतदिति सुरसरितोदेव

नद्याः परिसरस्तीरं तस्यालंकारभूतं आयतनंस्थानं अनादिरीश्वरः आयतनवान् जातइत्यर्थः एषदेवइति एषदेवः द्योतनात्देवः परमात्मापुराविद्भिः क्षे

एषदेवःपुराविद्भिःक्षेत्रस्यात्मेतिगीयते अत्रदे
हंसमुत्सृज्यपुण्यभाजोविशंतियं ३०

त्रविद्भिः क्षेत्रमहिमज्ञैः व्यासादिभिः क्षेत्रस्यात्माक्षेत्राभिमानिनीदेव ते तिगीयतेउच्यते पुण्यंईश्वरंभजंतिसेवंतेतेपुण्यभाजः शिवभक्ताः अत्रआदिकेशवसन्निधौ देहंसमुत्सृज्ययंविशंतिप्रविशंतिप्राप्नुवंतीत्यर्थः ३०

एतइति अनेनविवेकासक्तिमात्रेणकामादीनांपराभवोदर्शितः रथादवतीर्येत्य

स्रूतः आयुष्मन्नृपश्यपश्य एतेतावत्कामक्रोध
लोभादयोऽस्मद्दर्शनमात्रादितोदेशात्दूरमतिक्रा
मंति राजा एवमेतत् तद्भवतुस्वाभीष्टसिद्धयेभ
गवंतंनमस्यामः रथादवतीर्यप्रविश्यावलोक्यच
जयतुजयतु भगवान्

नेनशरीरेंद्रियेष्वौदासीन्यंसूचितं बोधोत्पत्तिरूपस्वाभीष्टसिद्धयेभगवंतमा
दिकेशवंस्तौति

अमरचयेत्यादिना भगवान्षड्गुणैश्वर्यसंपन्नः उत्पत्तिंचविनाशंचभूता नामागतिंगतिं वेत्तिविद्यामविद्यांचसवाच्योभगवानिति जयतुसर्वोत्कर्षेणव र्ततां अमरचयेति सर्वाणिसंबुध्यंतानि अमराणांदेवानांचयः समूहस्तस्य चमूचक्रंसेनामंडलंतस्यचूडामणिश्रेणिभिः मुकुटमणिपंक्तिभिः नीराजितंउ पांतेसमीपेपादद्वयांभोजंचरणयुग्मकमलंयस्य राजंतः शोभंतोयेनखास्तेषांद्यो ताः प्रकाशाः तएवखद्योताः तैः किर्मिरितंशबलितंस्वर्णपीठंयस्य स्फुरद्यत्द्वैतं भेदः तस्ययाभ्रांतिः तस्याः संतानेनपरंपरयासंतप्ताः खिन्नायेवंदारवोवंदनशीलाभ क्ताः तेषांसंसाररूपायानिद्रातस्याः अपहारेविनाशेएकोमुख्योदक्षः तस्यसंबोध नंहेदक्ष एवंसंबुध्यंतेषुसर्वत्रज्ञेयं क्षमेति क्षमामंडलस्यक्षोणीवलयस्ययउद्धा

अमरचयचमूचक्रचूडामणिश्रेणिनीराजितोपांत
पादद्वयांभोजराजन्नखद्योतखद्योतकिर्मिरितस्व
र्णपीठ स्फुरद्द्वैतविभ्रांतिसंतानसंतप्तवंदारुसंसार
निद्रापहारैकदक्ष क्षमामंडलोद्धारसंभारसंघट्ट
दंष्ट्राग्रकोटिस्फुरच्छैलचक्र क्रमाक्रांतलोकत्रय
प्रबलभुजबलोद्धृतगोवर्धनछत्रनिवारिताखंडलो
द्योजिताकांडचंडांबुवाहातिवर्ष त्रसद्गोकुलत्राणवि
स्मापिताशेषविश्व प्रभो विबुधरिपुवधूवर्गसीमंत
सिंदूरसंध्यामयूखच्छटोन्मार्जनोद्दामधामाधिप

रः तेनसंभाराणांपर्वतादीनांसंघट्टः संमर्दोयस्मिन् दंष्ट्राग्रकोटौदंष्ट्राग्रभागेस्फु रच्छैलचक्रंपर्वतसमूहोयस्य क्रमेणपादनिक्षेपेणआक्रांतंलोकत्रयंयेन प्रकृष्ट बलाभ्यांभुजाभ्यांबलेन उद्धृतंऊर्ध्वधृतंयद्गोवर्धनरूपंछत्रंतेननिवारितंनितरांवा रितंआखंडलेनइंद्रेणउद्योजिताः प्रेरिताः अकांडे असमयेचंडाः प्रलयकालीना अंबुवाहामेघाः तेषांअतिवर्षंयेन त्रसद्गीतंयद्गोकुलंतस्यत्राणंरक्षणंतेनविस्मा पितंआश्चर्ययुक्तंविश्वंयेन प्रभो अव्याहतेश्वर्य विबुधादेवास्तेषांरिपवोदान वास्तेषांयोवधूवर्गः स्त्रीसमूहः तस्ययत्सीमंतेषुसिंदुरंतदेवसंध्यामयूखच्छटा संध्याकालीनामयूखाः किरणाः तेषांछटाभातस्याउन्मार्जनेप्रोंछनेउद्दामंप्रसिद्धं यद्धामतेजः तस्याधिपः आश्रयः तस्यसंबोधने हेअधिप

त्रस्तोलीनोयोदैत्येंद्रोहिरण्यकशिपुः तस्यवक्षस्तस्याः पाटनेविदारणे अकुंठ अप्रतिहताभास्वतीदीप्तिमतीनखानांश्रेणिः पंक्तिर्यस्यतादृशंयत्पाणिद्वयंत- स्मात्स्रस्तंअधः पतितंविस्तारिप्रसरणशीलंयद्रक्तंतस्य अर्णवः सागरः तस्मिन् आसमंतात् मग्नंलोकत्रयंयेन त्रिभुवनस्यरिपुः यःकैटभोदैत्यः तस्यउद्दंडः स्थूलोयः कंठः तस्यास्थिकूटंअस्थिसंघातस्तस्मिन् स्फुटंस्पष्टंउन्मार्जितंशोधितंउद्दामंख्यातंयच्चक्रंसुदर्शनंतस्यस्फुरद्दीप्यमानंयज्ज्योतिः तेनउल्लासिताउद्दामा

त्रस्तदैत्येंद्रवक्षस्तटीपाटनाकुंठभास्वन्नखश्रेणिपा
णिद्वयस्रस्तविस्तारिरक्तार्णवामग्नलोकत्रय त्रिभु
वनरिपुकैटभोद्दंडकंठास्थिकूटस्फुटोन्मार्जितोद्दाम
चक्रस्फुरज्ज्योतिरुल्लासितोड्डामरोद्दंडदोर्दंड खंडें
दुचूडप्रिय प्रौढदोर्दंडविभ्रांतमंथाचलक्षुब्धदु
ग्धांबुधिप्रोत्थितश्रीभुजवल्लिसंश्लेषसंक्रांतपीन
स्तनाभोगपत्रावलीलांछितोरःस्थल स्थूलमुक्ता
फलोदारहारप्रभामंडलस्फुरत्कंठ

उड्डामराउद्भटाउद्दंडाश्चत्वारोदोर्दंडाःबाहवोयस्य खंडेंदुचूडोमहादेवःप्रियोयस्य प्रौढअतिप्रबलोयःदोर्दंडःबाहुदंडः तेनविभ्रांतः भ्रामितोयोमंथाचलः मंदराद्रिः तेनक्षुब्धोयोदुग्धांबुधिः दुग्धसमुद्रः तस्मिन्प्रोत्थिताआविर्भूतायाश्रीः लक्ष्मीस्तस्यायाभुजवल्लिः तत्संश्लेषेणालिंगनेनसंक्रांतापीनस्तनयोराभोगेविशालेस्थलेया पत्रावली पत्रलेखातयालांछितंउरः स्थलंयस्य स्थूलानियानिमुक्ताफलानितेषामुदारश्चासोहारश्चतस्यप्रभामंडलेनस्फुरन्कंठोयस्य

वैकुंठपरमात्मन् भक्तस्यलोकस्यभक्तजनस्ययःसंसारःतदुपादानंमोहःभावरूप मज्ञानंछिनत्तीतिछित्तंबोधोदयंब्रह्मादैतसाक्षात्कारोदयंदेहिदेवत्वंप्रकाशतुभ्यं

वैकुंठ भक्तस्यलोकस्यसंसारमोहच्छिदंदेहिबोधो दयंदेवतुभ्यंनमः निर्गमंनाटयित्वाविलोक्यच सा धुरयमेवास्माकंनिवासोचितोदेशः तत्रैवस्कंधावा

रंनिवेशयामइतिनिष्क्रांतौ इतिश्रीकृष्णमिश्रवि रचितेप्रबोधचंद्रोदयनाम्निनाटकेविवेकोद्योगोना मचतुर्थोंकः ४

नमोस्तु नाटयित्वाक्रमणविशेषेणदर्शयित्वेत्यर्थः स्कंधावारंकटकंनिवेशयामः स्थापयामः इतिनिष्क्रांतौविवेकसारथिनावितिशेषः इतिश्रीप्रबोधचंद्रोदय व्याख्यानेप्रकाशाख्येविवेकोद्योगोनामचतुर्थोऽंकः समाप्तः ४

# सटीकप्रबोधचंद्रोदयनाटकअंकपंचम

इत्थंचतुर्थेंकेविवेकोद्योगमुक्त्वावैराग्योत्पत्तिंवर्णयितुंपंचमेंकेश्रद्धायाः प्रवेशंस्तौति ततःप्रविशतिश्रद्धेति परस्परप्रतिस्पर्द्धिनोः संग्रामंसूचयंतीआह प्रसिद्ध इति अयमित्यनेनोक्तंपंथानंविशदयति यतः निर्दहतीति वैरात्संभवउत्पत्तिर्यस्यएतादृशोयः क्रोधःसज्ञातीनामशेषंसमस्तंकुलंनिर्दहति तत्रदृष्टांतः घनः प्रचंडोयः पवनोवायुः तेनाहताआंदोलितायेतरुवराः स्थूलवृक्षाः तेषांसंघट्टेन

ततःप्रविशतिश्रद्धा विचिंत्य खल्वयंप्रसिद्धः पंथाः यतः निर्दहतिकुलमशेषंज्ञातीनांवैरसंभवःक्रोधः वनमिवघनपवनाहततरुवरसंघट्टसंभवोदहनः १ सास्रं अहोदुर्वारोदारुणःसोदरव्यसनजन्माशोकानलोयोविवेकजलधरशतैरपिनमंदीक्रियते तथाहि ध्रुवंध्वंसोभावीजलनिधिमहीशैलसरितामतोमृत्योः शीर्यत्तृणलघुषुकाजंतुषुकथा।

संघर्षेणसंभवोजन्मयस्यसः तादृशोदहनोग्निः वनमिव १ उक्तंचमहाभारते धूमायंतेव्यपेतानिसंहतानिज्वलंतिच उन्मूलकानीवभांतिज्ञातयोभरतर्षभेति सोदराणांबंधूनांव्यसनंमरणंतस्माज्जन्मयस्यसः शोकएवानलोग्निः विवेकएवजलधराः मेघास्तेषांशतानितैः एतदेवस्पष्टयति ध्रुवमिति जलनिधयश्च समुद्राः महीचशैलाश्चपर्वताः सरितश्चनद्यः तासांस्थिराणामपिध्रुवंनिश्चयेन ध्वंसोभावीभविष्यति अतोहेतोशीर्यत्त्रुटितंयत्तृणंतद्वल्लघुषुअतितुच्छेषुजंतु

षुप्राणिषुमृत्योर्मरणस्यकाकथा किंवक्तव्यमित्यर्थः तथापि एवंविवेकेजातेऽपि उच्चैरतिशयेनकोप्यनिर्वच्यिः विषमोऽसह्यः विवेकंप्रकर्षेणोन्माथ्यातिनाशयतिता दृशः बंधूनांव्यसनेननिधनेनजनितः शोकएवदहनोऽग्निः हृदयंचेतोदहति २ का मादिवधस्यनाट्येप्रत्यक्षतः कर्तुमशक्यत्वाच्छन्दामुखेनतंसूचयति येनतथेति कथावार्ता सैवशेषोऽवशिष्टंभागः तस्यभावस्तत्तातांगतेषुप्राप्तेषुमृतेष्वित्यर्थः निकृंततीति क्रूरः असह्यः शोकाग्निः उत्ऊर्ध्वाःशिखाः यस्यउदरपूरकत्वादुच्छिखः मेममम

तथाप्युच्चैर्बंधुव्यसनजनितःकोपिविषमोविवेकन्मो
न्माथीदहतिहृदयंशोकदहनः २ येनतथाक्रूरप्रकृ
तिकेष्वपिभ्रातृषुकामक्रोधादिषुकथावशेषतांगतेषु
निकृंततीवमर्माणिदेहंशोषयतीवमे दहतीवांतरात्मा
नंक्रूरःशोकाग्निरुच्छिखः ३ विचिंत्य आदिष्टास्मि
देव्याविष्णुभक्त्यावत्सेश्रद्धेअहमत्रहिंसाप्रायसम
रदर्शनपराङ्मुखीतेनवाराणसीमुत्सृज्यशालग्रा
माभिधानेभगवतःक्षेत्रेकंचि
त्कालमतिपालयामि त्वंतुय
थावृत्तमागत्यमेनिवेदयिष्य
सीति तदहंदेव्याःसकाशंग
त्वासर्वमेतत्समरवृत्तांतमावे
दयामि परिक्रम्यावलोक्य
च एतच्चक्रतीर्थं यत्रायंसंसारसागरोत्तारतरणिक
र्णधारोभगवान्हरिःस्वयंप्रतिवसति प्रणम्य

र्माणि निकृंतती वच्छिनत्तीव देहंशोषयतीव अंतरात्मानंमनोदहतीव ३ कामादिवधंपू र्वसूचितंप्रकटयितुंविष्णुभक्तेः प्रवेशंसूचयति आदिष्टेत्यादि विष्णुभक्तिर्नामजडा नृताहंकारादिरहिताज्ञानसत्यानंदाद्याकारामत्यक्चेतोवृत्तिः हिंसाप्रायः वधप्रधा नोसः समरः संग्रामः तद्दर्शनेनपराङ्मुखीउदासीना शालग्रामाभिधानेचक्रतीर्थे भगवतोविष्णोः क्षेत्रे अतिपालयामि अतिक्रमामि यथावृत्तंयेनप्रकारेणजातंवृत्तां तमितिशेषः आवेदयामिआवेदयिष्यामि यत्रेति यत्रचक्रतीर्थेसंसारसागरस्यो

नारेपारगमनेतरणिर्नौका स्त्रियांनौस्तरणिस्तरिरित्यमरः ज्ञानरूपा तस्याःक र्णधारोनियामकः महामुनिभिः नारदशुकपराशरादिभिः उपास्यमानासेव्यमा ना उपास्यमानेत्यनेनेदमुक्तं यन्नानाविधाभक्तिरेवपरमार्थसाधनंउपायांतरंनास्त्ये वकलौविक्षिप्तमनसांतुसुतरां भक्त्यैवअनेकेसंतीर्णाः तथोक्तं विष्णोस्तुश्रवणे परीक्षितिरभूद्वैय्यासकिः कीर्तने प्रल्हादःस्मरणे तदंघ्रिभजनेलक्ष्मीः पृथुःपूजने

इयंचमहामुनिभिःउपास्यमानाभगवतीविष्णुभ क्तिःशांत्यासहकिमपिमंत्रयते यावदुपसर्पामीति परिक्रामति ततःप्रविशतिविष्णुभक्तिःशांतिश्च

शांतिः देविप्रबलचिं ताकुलहृदयामिवभ वतीमवलोकयामि विष्णुभक्तिः वत्सेए तस्मिन्नतिमहतिसां परायेनजानेबलवता मोहेनाभियुक्तस्यवत्साविवेकस्यकीदृशोवृत्तांतइति दुःखितमिवमेहृदयं शांतिः किमत्रविचिंत्य ननु भवतीचेत्कृतानुग्रहातन्नियतमेवराज्ञोविवेकस्यवि जयइतिजानामि विष्णुभक्तिः वत्से यद्यप्यस्म दयःप्रायःप्रमाणादवधार्यते काममतथापिसुहृ दामनिष्टाशंकिमानसं ४ विशेषतश्चश्रद्धाया श्चिरमनागमनंमनसिसंदेहमारोपयति

अक्रूरस्त्वभिवंदनेथहनुमान्दास्येचसख्येर्जुनः सर्वस्वात्मनिवेदनेबलिरभूत्कैव ल्यमेषांपदमिति सांपरायेसंग्रामे अभियुक्तस्यातिरस्कृतस्य दुःखितमिवसचिं तमिव मेमम हृदयंमानसं नियतमेवनिश्चितमेव यद्यपीति यद्यपिभाग्योबाहु ल्येनाम्मदयोभाग्योत्कर्षः प्रमाणाद्धर्मपक्षपातित्वादवधार्यतेनिर्णीयते तथा पिकाममत्यर्थंसुहृदांमानसंअनिष्टाशंकि अनिष्टाशंकीत्यर्थः ४

देव्याः विष्णुभक्तेः विशेषनइत्यादिविष्णुभक्तेरित्यंतंस्कगमं चेतः पदं अंतःकरणरूपं स्थानं मोहविवेकयोः संग्राममनुवर्णयिष्यन् विष्णुभक्तिश्रद्धयोः प्रश्नोत्तरे अवतारयति अथतत्रेति देव्यांविष्णुभक्तौ आदिकेशवायतनात् गंगावरुणासंगमात् अपक्रांतायांचक्रतीर्थंप्रतिगतायामेव भगवति भास्वति अतिसमर्थेश्रीसूर्ये कीदृशेभास्वति किंचिदुत्सृष्टः त्यक्तः पाटलिमाश्वेतरक्तिमायेनतस्मिन् चपुनः तेषांमहामोह

श्रद्धा उपसृत्य भगवतिप्रणमामि विष्णुभक्तिः

श्रद्धे स्वागतं श्रद्धा- देव्याः प्रसादेन- शांतिः- अंब प्रणमामि श्रद्धा- पुत्रिमांपरिष्वजस्व- शांतिः तथाकरोति श्रद्धा वत्से देव्याविष्णुभक्तेः प्रसादान्मुनिजनचेतः पदं प्राप्नुहि- विष्णुभक्तिः अथतत्रकिंवृत्तं श्रद्धा य द्देव्याःप्रतिकूलमाचरतामुचितं विष्णुभक्तिः तद्वि स्तरेणावेदय श्रद्धा आकर्णयतु भवती देव्यामादिकेशवायतनादपक्रांतायामेवकिंचिदुत्सृष्टपाटलिम्नि भगवति भास्वति तेषामस्माकंचसन्नद्धसैन्यसागरे महाराजमहामोहस्य महाराजेननैयायिकदर्शनं दौत्येन प्रहितंगत्वाचतेनोक्तोमहामोहः विजयघोषेणाहूयमानानेकवर वीरबहलसिंहनादबधिरितदिगंते

पक्षे वर्तमानानां अस्माकंविवेकपक्षीयानांसैन्यसागरे सैन्यसमुद्रे सन्नद्धे सन्नाहयुक्ते सति महाराजेनविवेकेनमहाराजमहामोहस्यांतिकमणिषष्ठीतंमतिनैय्यायिकंदर्शनंदौत्येनदूतस्यकर्मदौत्यंतेनप्रहितंप्रेषितमितिसंबंधः कीदृशेसैन्यसागरे विजयघोषेणविजयवाद्यशब्देनाहूयमाना अनेकेबहवोवराः श्रेष्ठाः वीराः योद्धारः तेषांबहलोत्रः सिंहनादः तेनबधिरिताः बधिराः संपादितादिशामंता येनतस्मिन्

पुनः कीदृशे सततंनिरंतरं रथाश्वतुरगखुराश्वतैः खंडितंचूर्णितंयद्भूमंडलंतस्मादु च्छलदूर्ध्वंपतत्यद्विपुलंरजःपटलंधूलीसमूहः तेनांतरितआच्छादितः किरणमाली तरणिर्येनतस्मिन् पुनःकीदृशे प्रबलतरंयत्कर्णतालास्फालनंतेनोच्छलद्यत्करि कुंभसिंदूरंतेनसंध्यायमानाः संध्यातुल्यादशदिशोयेनतस्मिन् पुनःकीदृशे प्रल यकालीनाजलधरास्तेषामिवध्वानः शब्दः तेनभीषणेभयानके दूतेनकिमुक्तस्त- दाह विष्णोरिति हेमहामोहेत्यध्याहारः भवात्सानुगः अनुगैः कामक्रोधादिभिः सहम्लेच्छान्म्लेच्छदेशान्व्रजेत्गच्छतु किंकृत्वा विष्णोरायतनानिस्थानानि

सततरथतुरगखुरखंडितभूमंडलोच्छलद्विपुलर जःपटलांतरितकिरणमालिनि प्रबलतरकर्णताला स्फालनोच्छलत्समदकरिकुंभसिंदूरसंध्यायमान दशदिशि प्रलयजलधरध्वानभीषणे तेषामस्मा कंचसन्नद्धेसैन्यसागरे महाराजमहामोहस्यम हाराजनेनैध्यायिकदर्शनंदौत्येनप्रहितं गत्वाचतेनो क्तोमहामोहः विष्णोरायतनान्यपास्य सरितांकू लान्यरण्यस्थलीः पुण्याःपुण्यकृतांमनांसिचभवा न्म्लेच्छान्भवेत्सानुगः नोचेत्संतुकृपाणदारित भवत्प्रत्यंगधाराक्षरद्रक्तस्फीतविदीर्णवक्त्रविवराः फेत्कारिणःफेरवाः ५ विष्णुभक्तिः ततस्ततः श्र द्धा ततोदेवि विकटललाटतटतांडवितभ्रुकुटिनाक्रु द्धेनमहामोहेनाभिहितम्

शालग्रामक्षेत्राणिसरितांगंगादीनांकूलानितीराणिपुण्याः पावनाः अरण्यस्थली नैमिषारण्यभूमीः पुण्यकृतांयाज्ञिकानांमनांसिअपास्यपरित्यज्येतिसर्वत्रसंब ध्यते नोचेन्नगच्छसिचेत्फेत्कारिणः फेत्कारशब्दयुक्ताः फेरवाःसृगालाः कृपा णेनखड्गेनदारितंछिन्नंभवतोयत्प्रत्यंगंतस्मान्धारयाक्षरत्निर्गच्छद्यद्रक्तंतेनस्फी तानिदीप्तानि वक्त्राणांविवराणिछिद्राणियेषांतादृशाः संतुभवंत्वित्यर्थः ५ ततस्ततः पुनःपुनरित्यर्थः ततइति विकटाविषमाललाटतटेभालफलकेतांड विताननर्तिताभ्रुकुटिर्भ्रूर्येनतादृशेनमहामोहेन अभिहितंउक्तंकिमुक्तंतदाह

अनुभवत्विति दुर्नयोदुर्नीतिः तस्याः परिपाकः फलंतस्यविवेकहतकः विवेकप्रेतः पा खंडागमाः सूगतचार्वाकयोगाचारजैनकापालिकाद्यागमाः तेषांपाखंडतर्कप्रतिपाद कानिशास्त्राणितैः सहसमरायसंग्रामायससुद्योजिताः समुद्योगवंतः कृताः अत्रे ति अत्रांतरेएतस्मिन्समये सैन्यशिरसिसैन्यमस्तके वेदेति सरस्वतीसहसाअ कस्मात् आविरासीत् प्रकटीबभूव कीदृशीसरस्वती वेदाश्चत्वारः उपवेदाआयु वेंद धनुर्वेदगांधर्वार्थशास्त्राणि अंगानि शिक्षाकल्पोव्याकरणंनिरुक्तंछंदोज्योति षमिति आगमाः नारदपंचरात्रंरुद्रयामलकइत्यादयः पुराणानिअष्टादशमत्स्य

अनुभवत्वस्यदुर्नयपरिपाकस्यविवेकहतकः फलं
मित्यभिधायस्वयंपाखंडागमाः पाखंडतर्कशास्त्रैः
समंसमरायप्रथमंसमुद्योजिताः अत्रांतरेचास्मा
कमपिसैन्यशिरसि वेदोपवेदांगपुराणधर्मशास्त्रे
तिहासादिभिरुच्छ्रिताश्रीः सरस्वतीपद्मधराशशां
कसंकाशकांतिःसहसाविरासीत् ६ विष्णुभक्तिः
ततस्ततः श्रद्धा ततोदेविवैष्णवशैवसौरादयोदे
व्याःसकाशमागताः विष्णुभक्तिः ततस्ततः श्र
द्धा तदनंतरंच सांख्यन्यायकणादभाषितमहा
भाष्यादिशास्त्रैर्वृतास्फूर्जन्न्यायसहस्रबाहुनिकरैरु
द्योतयंतीदिशः मीमांसासमरोत्सुकाविरभवन्दुर्से
दुकांताननावाग्देव्याः पुरतस्त्रयीत्रिनयनाकात्याय
नीवापरा ७

मार्कंडेयादीनिधर्मशास्त्राणिमन्वादिस्मृतयोष्टादशतावंत्यउपस्मृतयः इतिहासा महाभारतादयः आदिग्रहणात्पुराणबहिर्भूताः स्तोत्रकवचादयः तैरुच्छ्रिताअति शयिताश्रीः शोभायस्याःसा पुनःकथंभूतासरस्वती पद्मंकरेयस्याःसा पाठांतरे प द्मधरतीति पुनःकथंभूतासरस्वती शशांकेनचंद्रमसासंकाशातुल्याकांतिर्दीप्ति र्यस्याःसा वैष्णवं अणवात्मवादिनांमतं शैवंपाशुपतंशास्त्रं सौरंसौरागमः ६ सां ख्यन्यायेति वाग्देव्याः पुरतः अग्रेसमरायउत्सुका उत्कंठामीमांसापूर्वोत्तरमी मांसाविचारप्रधानाभाट्टप्राभाकरशास्त्ररूपाआविरभवत् प्रकटीबभूव कीदृशी

मीमांसा सांख्यंप्रसिद्धंन्यायोगौतमप्रणीतंशास्त्रंकणादेनभाषितं वैशेषिकंदर्शनं महाभाष्यादीनिव्याकरणादीनिशास्त्राणितैर्युतायुक्तेत्यर्थः पुनःकीदृशीमीमांसा स्फूर्जंतीअबाधितायेन्यायाअधिकरणानितेषांसहस्रंतएवबाहवोहस्तास्तेषांनि करैःसमूहैर्दिशः वैदिककर्मब्रह्मबोधनमार्गान्उद्योतयंतीप्रकटयंती पुनःकीदृशीमी मांसा धर्मएवइंदुस्तद्वत्कांतंमनोहरंआननंयस्याःसा पुनःकीदृशीमीमांसा त्रयी वेदत्रयीसैवत्रीणिनयनानिनेत्राणियस्याःसा तत्रोत्प्रेक्षते अपराद्वितीयाकात्यायनीव तत्राप्येतानिविशेषणानियोज्यानि ७ परस्परविरोधिनांकथंसमवायइतिशांतिरा- क्षिपति अयेकथमिति स्वभावद्वेष्टिनांस्वारसिकविरोधिनांतर्काणांशास्त्राणांआग मानांवेदानांच द्वेवाब्रह्मणीवेदितव्ये एकमेवाद्वितीयमित्यादिविरुद्धार्थकत्वात्

शांतिः अयेकथंपुनःस्वभावद्वेष्टिनामागमानांचतर्का णांसमवायःसंपन्नः श्रद्धा पुत्रि समानान्वयजा तानांपरस्परविरोधिनां परैःप्रत्यभिभूतानांप्रसू तेसंगतिःश्रियम् ८ येनवेदप्रसूतानांतेषांआंतर विरोधेपिवेदसंरक्षणायनास्तिकपक्षप्रतिक्षेपणाय शास्त्राणांसाहित्यमेव

समवायोमेलकः कथंसंपन्नोजातः समाधत्ते पुत्रीति समानान्वयेति समानान्वय जातानांएकोवंशोवेदः तस्मात्सूतानांपरस्परविरोधिनां परैःसाधारणशत्रुभिः प्रत्य भिभूतानांपराभूतानांसंगतिर्मेलनं श्रियंशोभांप्रसूते अनेनस्वपक्षरक्षणायपर पक्षाधिक्षेपइतिलक्ष्यते ८ ननुस्वतंत्रऋषिप्रणीतानांभिन्नमतावलंबिनांदर्शना नांकथमेकवंशप्रसूतत्वमित्याशंक्याह येनेति वेदमूलत्वंएकवंशप्रसूतत्वेबीजमि तिभावः साहित्यमेवअविरोधएव ननुस्वतंत्रऋषिप्रणीतानांशास्त्राणांपौरुषेय त्वाद्विरुद्धार्थाभिधायकत्वेऽन्यतरस्याप्रामाण्यप्रसंगात्विरोधेचोभयस्याशास्त्रा र्थत्वात्उपपद्यतेशास्त्रेष्विदंप्रमाणमिदमप्रमाणमितिविचारणा अपौरुषेयासू पनिषत्सुद्वेवाब्रह्मणीवेदितव्ये द्वासुपर्णासयुजासखाया एकमेवाद्वितीयं ऐत दात्म्यमिदंसर्वमित्यादिविरुद्धार्थकत्वंकथंसोढुंशक्यं भ्रमप्रमाणविप्रलिप्साकर णापाटवादिपुरुषदोषाणामनिरूपणादित्याशंक्यतत्रविरुद्धार्थकत्वमेवनास्तीत्याह

आगमानामिति तत्वंविचारयतांतत्वप्रतिपादकानां तत्वमद्वितीयब्रह्माखंडश ब्दार्थरूपंतदेवसाक्षात्कृतंप्रयोजनंतथाचपदार्थानांविरोधेपिवाक्यार्थस्यैकत्वान्न तत्रविरोधशंकाशूकमपीतिभावः उक्तमर्थमाविष्करोति तथाहि ज्योतिरिति तैस्तैः प्रसिद्धैः सदागमैः समीचीनैः वैदिकपरिगृहीतैः आगमैः नारदपंचरात्रादि भिः ज्योतिः ब्रह्मैवअनेकधा अनेकप्रकारंप्रस्तूयते उपास्यते तेकेप्रकाराइत्यपे क्षायामाह ब्रह्मेत्यादि ब्रह्मैवतत्वमिति हैरण्यगर्भाः अच्युतइतिवैष्णवाः उ मापतिरितिशैवाः नन्वेतान्येवपारमार्थिकानिनानातत्वानि संतुकुतोऽविरोधइ- त्याशंक्याह तैतैर्येगुणाः रजःसत्वतमोरूपाः तेषामुन्मीलनादाधिक्यात् ब्रह्मे त्यादिसंज्ञाः रजसआधिक्यात् ब्रह्मेति सत्वाधिक्याद्विष्णुरितितमसआधिक्यात्

आगमानांचतत्वंविचारयतामविरोधएव तथाहि ज्योतिःशांतमनंतमद्वयमजंतत्तद्गुणोन्मीलनाद्ब्र ह्मेत्यच्युतइत्युमापतिरितिप्रस्तूयतेनेकधा तैस्तै रेवसदागमैःश्रुतिसुरवैर्नानापथप्रस्थितैर्गम्योसौज गदीश्वरोजलनिधिर्वारांप्रवाहैरिव १ विष्णुभक्तिः ततः२ श्रद्धा ततोदेविपरस्परकरितुरगरथपदाती नांनिरंतरशरनिकरधारासंपातोपदर्शितदुर्दिनानां तेषामस्माकंचयोधानांतुमुलःसंप्रहारःप्रावर्तत

उमापतिरिति एकस्यैवगुणोपाधिकाःसंज्ञाः नतुवास्तवोभेदइतिभावः कीदृशं ज्योतिः शांतंरागद्वेषाभिनिवेशशून्यं पुनःकीदृशं अनंतंवस्तुतःकालतोदेश तश्चेतित्रिविधपरिच्छेदशून्यं पुनःकथंभूतंअव्ययंविकारशून्यं अजंजन्मर- हितं यद्यप्येवंतथापिनानाश्रुतिभिः ब्रह्मविष्णुशिवप्रतिपादकाभिर्नानात्वमेव तत्वस्य भित्या शंक्याह नानेति नानापथप्रस्थितैः नानामार्गप्रवृत्तैः श्रुतिसुरवै रुपनिषत्प्रधानैः असौअपरोक्षोजगदीश्वरः यत्साक्षादपरोक्षादितिश्रुतेः ग म्यः लक्षणयाबोध्यः अभेदेदृष्टांतमाह वारांजलानांप्रवाहैर्जलनिधिरिव यथा नद्यः स्यंदमानाःसमुद्रमस्तंयांति नामरूपेविहायेत्यादिश्रुतेः तथाचगीतायाम् येप्यन्यदेवताभक्तायजंतेश्रद्धयान्विताः तेपिमामेवकौंतेययजंत्यविधिपूर्वकंइ ति १ ततोदेवीति तेषामस्माकंचकरितुरगरथपदातीनां योधानां वीराणांतुमुलो

दारुणः संप्रहारः संग्रामः प्रावर्तत अजायत कीदृशानां तेषांअस्माकंच निरंतरंनिबि डंशरनिकराणांबाणसमुदायानांयोधारासंपातइव संपातोवृष्टिः तेनउपदर्शितंदु र्दिनंमेघाच्छन्नमहोयैस्तेषां बहलेति तत्रसंग्रामेस्रवंत्योनद्यः सस्रुः अस्रवन् कीदृश्यः स्रवंत्यः बहलंरुधिरमेवतोयंजलंयास्रुताः पुनःकीदृश्यः स्रवंत्यः निबि डंयनंपिशितंतदेवपंकः कर्दमोयास्रुताः पुनः कीदृश्यः स्रवंत्यः कंकाःपक्षिणः तएवरंकाः दीनाः प्राणिनः तैरवकीर्णाः व्याप्ताः पुनःकीदृश्यःस्रवंत्यः शरैर्दलिताः जर्जरीकृताः अतएवविदीर्णाः येउत्तुंगाः उच्चाः मातंगाः करिणः तएवशैलाः पर्व ताः तेभ्यः स्खलितरयाः शून्यवेगाश्चतेविकीर्णछत्राण्येवहंसास्तएव अवतंसाः भूषणानियास्रुताः १० अथपाखंडन्यक्कारमाविष्करोति तस्मिंश्चेति तस्मिन्प्र

तथाहि बहलरुधिरतोयास्तत्रसस्रुःस्रवंत्योनिबि डपिशितपंकाःकंकरंकावकीर्णाः शरदलितविदी र्णोत्तुंगमातंगशैलस्खलितरयविकीर्णच्छत्रहंसाव तंसाः १० तस्मिंश्चातिमहतिदारुणेसंग्रामेपरापर पक्षविरोधितयापाखंडागमैरग्रेसरीकृतंलोका यतिकंतंत्रमन्योन्यसैन्यविमर्दनैर्नष्टं अन्यत् पा खंडागमानिर्मूलनयासदागमार्णवप्रवाहेणपर्यस्ताः

र्वनिरूपितेअतिमहतिदारुणेसंग्रामेलोकायतिकंतंत्रंशरीरात्मवादिशास्त्रं अ- न्योन्यंपरस्परंसैन्यस्यविमर्दनानिसंघट्टनानितैरेवनष्टं सर्वथामुक्तिशून्यमिति भावः तस्यप्रथमतोविनाशहेतुमाह कीदृशंतंत्रं पाखंडागमैः सौगतसौत्रां तिकमाध्यमकादिभिः अग्रेसरीकृतं अन्योन्यविमर्दनेकारणमाह परापरे ति परःउत्कृष्टःसदागमरूपस्तर्कः अपरः अपकृष्टः पाखंडागमरूपस्तर्कः तयोर्विरोधितया लोकायतादिभूतपरिणामरूपशरीरमेवात्मानमूररीकुर्वंति त- त्रास्तिकानांसर्वेषांनास्तिकानांचानभिमतमतोविरोधइतिभावः अन्यदिति अ- न्यदप्यस्तिश्रोतव्यमितिशेषः पाखंडेति सदागमाः समीचीनाः आगमाः वेद मूलाः तएवातिविस्तृतत्वादर्णवाःतत्प्रवाहेनप्रमाणपरंपरारूपेण पाखंडागमाः प- र्यस्ताः दूरेप्रक्षिप्ताः यतोनिर्मूलाइत्यर्थः तदेवाह

सौगताइति सौगताः सुगतप्रणीताः आगमाः म्लेच्छप्रायान्म्लेच्छधर्माक्रांतान् जनपदान्देशान्प्रविष्टाः तेदेशाः सिंधुगांधारादयः पाखंडेति पाखंड अहिंसामात्रनिरतः अग्नीषोमीयादिहिंसामपितिरस्कुर्वन् श्वेतपटसिद्धांतोदिगंबरः सत्वासत्ववादीक्षपणकसिद्धांतः कापालिकोभैरवसिद्धांतोयथेष्टवादीपामराश्रतिनीचाः तद्बहुलेषुनत्प्रचुरेषु नास्तिकानांबाह्यानांतर्कशास्त्राणि अनुपश्चात्तेषामेवागमानांपाखंडागमानांपदंस्थानंप्रयाताः प्राप्तादित्यर्थः ततोवस्तुविचारेणे-

सौगतास्तावत्सिंधुगांधारमागधांध्रहूणवंगकलिंगादीन्म्लेच्छप्रायान्जनपदान्प्रविष्टाः पाखंडदिगंबरकापालिकादयस्तुपामरबहुलेषुपांचालमालवाभीरावर्तसागरानूपेषुनिगूढंसंचरंति न्यायाद्यनुगतया मीमांसयावगाढप्रहारजर्जरीकृताः नास्तिकतर्कास्तेषामेवागमानां अनुपदंप्रयाताः विष्णुभक्तिः ततः२ श्रद्धा ततोवस्तुविचारेणकामोहतः क्षमयाक्रोधपारुष्यहिंसादयोनिपातिताः संतोषेणलोभतृष्णादैन्यानृतवादपैशून्यस्तेयपरिग्रहानिगृहीताः अनसूययामात्सर्यंजितं परोत्कर्षसंभावनयामदोनिषूदितः परगुणाधिक्येनमानःखंडितः विष्णुभक्तिः सहर्षं साधु २ संपन्नं अथमहामोहस्यकोवृत्तांतः श्रद्धा देविमहामोहोपियोगोपसर्गैः सहनज्ञायते क्वापिनिलीनास्तिष्ठतीति विष्णुभक्तिः अस्तितर्हिमहाननर्थशेषः प्रहरणीयश्चासौ यतः अत्यादरपरोविद्वानीहमानःस्थिरांश्रियम् अग्नेःशेषमृणाच्छेषंशत्रोःशेषंनशेषयेत् ११

त्यादि अथमहामोहस्येत्यंतनिगदव्याख्यानं स्पष्टं योगभ्रंशंमोहस्यदृष्ट्वायोगिभिः समाहितमनस्कतयास्थानव्यमितिज्ञासयंतीविष्णुभक्तिर्मोहवृत्तांतंपृच्छति अथेति वृत्तांतःसमाचारः योगोपसर्गैः योगविघ्नैः सहनिलीनोगुप्तस्तिष्ठतिइतिहेतोर्नज्ञायते उक्तेर्नयमुपदिशति यतइति विद्वान्पंडितःअत्यादरपरः अति

शयितादरयुक्तः स्थिरांनिश्चलांश्रियंसंपत्तिंईहमानः इच्छन् अग्रेःशेषंऋणा-
च्छेषंशत्रोःशेषंनशेषयेत् नस्थापयेत् अनादरपरइतिपाठे अग्न्यादिशेषस्थापने
अनादरवतानभाव्यं किंतु तत्परिहारे यत्नवताभाव्यमितिभावः ११ वैराग्यवतो
मनसः प्रवेशमाह अथमनसइति पुत्रपौत्रादिमरणजनितशोकस्यावेशः प्रवेशो
यस्मिन्तेनमनसाजीवोत्सर्गाय प्राणत्यागायव्यवसितंनिर्णयः कृतः स्मितंहास्यं

अथमनसःकोवृत्तांतः श्रद्धा देवितेनापिपुत्रपौत्रा
दिव्यसनजनितशोकावेशेनजीवोत्सर्गायव्यवसितं
विष्णुभक्तिः स्मितंकृत्वायद्येवंस्यात्सर्वएववयंकृत
कृत्याभवामःपुरुषश्चपरांनिर्वृतिमापद्येतकिंतुकुतस्त
स्यदुरात्मनोजीवत्यागः श्रद्धा एवंदेव्यांप्रबोधोद
यायगृहीतसंकल्पायामचिरंशरीरेणसहनैवभविष्यति
ष्यति विष्णुभक्तिः तद्भवतुअस्यवैराग्योत्पत्त
येवैय्यासिकींसरस्वतींप्रेषयामइतिनिष्क्रांते प्रवेश
कः ततःप्रविशतिमनःसं
कल्पश्च मनः सास्रं हा
पुत्रकाः क्वगताःस्थदत्तमे
प्रियदर्शनं भोभोकुमार
कारागद्वेषमदमानमात्स
र्यादयःपरिष्वजध्वंमां
सीदंतिममांगानिहानकश्चिन्मांदृन्द्वमनाथंसंभाव
यति क्वगताअसूयादयःकन्यकाः आशाहिंसातृ
ष्णादयोवास्नुषाः

यद्येवंस्यात्म्रियेतविषयनिर्मुक्तंस्यादित्यर्थः कृतकृत्याःसंपन्नप्रयोजनाः पुरुषो
जीवःपरांनिर्वृतिंपरमानंदं दुरात्मनोदुष्टस्वभावस्यदेव्यामुपनिषद्रूपायांशरीरे
णालिंगशरीरेणसहनभविष्यतिविरक्तंभविष्यति प्रवेशमुपसंहरति तद्भवत्विति
निष्क्रांतेविष्णुभक्तिश्रद्धे संकल्पोमनोव्यापारः दत्तप्रयच्छतप्रियंइष्टंदर्शनम्
प्रतिवचनमितिपाठे प्रतिवचनंप्रत्युत्तरम्

विसर्पतीति एषः शोकज्वरः विषाग्निवत् विषरूपोग्निः तद्वद्विसर्पतिसर्वशरीरं-
व्याप्नोति मेममशर्मस्कंवंमर्माणिचविषाग्निवत् विषवद्दहतिज्वालयति भृशमति
शयेनवेदनाः तनोतिविस्तारयति सर्वकाषंसर्वच्छेदंयथास्यात्तथावपुःकषतिछिन
त्तिविवेकितांविलुंपतिविनाशयतिहृदिमनसिमोहंबुद्धिभ्रंशंउन्मीलयतिप्रकटय
ति अहोइतिचित्रंप्रसभंहठेनजीवितंग्रसतिगिलति शोकज्वरइतिसर्वत्रानुषंजनी
यं १२ प्रवृत्तिः प्रवर्तिकावेदविद्या एवमवस्थंमुमूर्षुं यतइति यतोहेतोःश्रुतंआक

कथंताअपिमंदभाग्यस्यमेसमकालमेवदैवहतकेना
पहृताः सर्वेकुटुंबं विसर्पतिविषाग्निवद्दहतिशर्मम
र्माणिमेतनोतिभृशवेदनाःकषतिसर्वकाषंवपुः वि
लुंपतिविवेकितांहृदिचमोहमुन्मीलयत्यहोग्रसति
जीवितंप्रसभमेवशोकज्वरः १२ इतिमूर्च्छितःपत
ति संकल्पः राजन्समाश्वसिहि २ मनःसमाश्व
स्य कथंदेवी प्रवृत्तिरपिनमामेवमवस्थंसमाश्वा
सयति संकल्पः सास्त्रं देवकुतोद्यापिप्रवृत्तिः य
तःश्रुतंकुटुंबकव्यसनसंजातशोकानलदग्धहृद
याहृदयास्फोटंविनष्टा मनः हाप्रियेक्वासिदेहिमे
प्रियंप्रतिवचनं ननुदेवि स्वप्नेपिदेविरमसेनमया
विनात्वंस्वापेत्वयाविरहितोमृतवद्भवामि दूरीकृ
तासिविधिदुर्ललितैस्तथापिजीवत्यवेहिमनइत्य
सवोदुरंताः १३ पुनर्मूर्च्छति संकल्पः

र्णितंकुटुंबकानांकामादीनांव्यसनंनिधनंतेनसंजातोयः शोकानलः तस्माद्दग्धंहृद
यंयस्याःसा हृदयास्फोटंपरिक्लिश्यमानेनेतिणमुल् हृदयंमास्फोट्यविदार्यवि
नष्टामृतेत्यर्थः वैराग्येउत्पन्नेप्रवृत्तिर्नभविष्यतीतितात्पर्यं अन्योनात्यधर्मः स्व-
प्नेपीति स्फुटंपूर्वार्धं हेदेविविधेःदैवस्यदुर्ललितैर्दुष्टविलसितैर्यद्यपिदूरीकृतासि
दूरंनीतासितथापिमनोजीवतीत्यलंअसंभावनीयमेतत् तर्हिजीवनेकोहेतुस्तत्रा
ह हियतः असवः प्राणाःदुरंताः सहसाप्रयत्नंविनाननश्यंति जीवत्यवेहिमनइतिपा
ठे तथापिमनोजीवतिकुतःअसवोदुरंताः नाशयितुंअशक्याः यतइति अवेहिजा

नीहि १३ सरस्वत्याःप्रवेशंस्तौति ततःप्रविशतीति सखिसरस्वतीतिसंबोधनेनयथा विष्णुभक्तिस्तथावैय्यासिकीसरस्वतीतिसूचितं यतःस्वप्रयत्नवतीभवविदितपूर्वेवे पूर्वंविदिताज्ञानाविदितपूर्वा भावानामित्यत्रउत्पन्निमतामितिशेषः तथाचपदार्थाःध्वं सवंतः उत्पन्नत्वादित्यनुमानं ननुचातुर्मास्यफलस्याक्षय्यत्वमितिश्रुतेरसिद्धोहेतुरि

राजन्समाश्वसिहि ३ मनःसमाश्वस्य अलमस्मा कमतःपरंजीवितेनसंकल्पः चितामारचय्यावदन लप्रवेशेनशोकानलंनिर्वापयामि ततःप्रविशतिसर स्वतीवैय्यासिकी प्रेषितास्मिभगवत्याविष्णुभक्त्या

यथासखिसरस्वतिग च्छापत्यव्यसनखिन्न स्यमनसःप्रबोधनाय यथाचतस्यवैराग्योत्प त्तिर्भवतितथायतस्वेति तद्भवतुतत्संनिधिमेवो पसर्पामि उपसृत्यवत्सकिमेवमतिविक्लवोसि ननुविदि तपूर्वंवंभवताभावानामनित्यता अधीतानित्वयैति हासिकान्युपाख्यानानि तथाहि भूत्वाकल्पशता युषोंबुजभुवःसेंद्राश्चदेवासुरामन्वाद्यामुनयोमही जलधरानष्टाःपराःकोटयः मोहःकोयमहोमहानु दयतेलोकस्यशोकावहोबंधोःफेनसमेगतेवपुषियत् पंचात्मकेपंचता १४

तिचेन्न अक्षय्यत्वश्रुतेर्गुणार्थवादत्वादतत्परत्वंतस्याःतद्यथेहकर्मजितोलोकःक्षी यतएवमेवामुत्रपुण्यजितोलोकःक्षीयतइतिश्रुत्यंतर विरोधाच्चश्रवणविधिवैय्यार्थ्याच्च हेतोरसिद्धत्वासिद्धेतिभावः विदितपूर्वेवानित्यतेत्यत्रबीजमाह अधीतानीति इ- तिहासेभवानिऐतिहासिकानि भूत्वेति अंबुजभुवोहिरण्यगर्भाःसेंद्राइंद्रेणस- हितादेवाअसुराश्चमन्वाद्याभूपालाःमुनयोऋषयः महीधरित्रीजलधराः सागराः पराः अधिकाःकोटयःकोटिभ्योधिकाः असंख्याताःभूत्वाउत्पद्यनष्टाःनाशंप्रा

मा: अल्पायुषः नाशोकापरिदेवनेत्याशंक्याह कल्पशतायुष इति कल्पानांशतानि आयुर्येषांतेतथा कल्पोयुगचतुष्टयंशतशब्दो ऽसंख्यातवचनः एवंचसतिबंधोः पुत्रादेः वपुषिदेहेफेनसमेबुद्बुदसमयजीवितेपंचात्मकेपांचभौतिकेपंचतांगतेमरणंप्राप्तेसतियत्उदयतेइ ति अयंलोकस्यशोकावहः शोकजनकः महान्अनिवारणीयः कोमोहःअहोइत्याश्चर्येनकोपीत्यर्थः १४ कृतमर्थंस्थिरीकर्तुंपुनःपुनरनुसंधेहिइत्युपदिशति तदिति भावयचिंतय भावनायाःफलमाह नित्येति नित्यंब्रह्मैव अन्यत्सर्वमनित्यंएतद्वस्तुद्वयस्यदर्शनः यद्वा नित्यंनिरंतरंअनित्यस्यनश्वरस्य प्रपंचस्ययद्वस्तु अधिष्ठानंब्रह्मतत् यःपश्यतिसः शोकावेगंसंसारंनपश्यतीत्यर्थः यतोन्यदन्यदिवपश्यन्मुह्यति एकत्वमनुपश्यतःकोमोहःकःशोकइत्यादिश्रुतिभिर

तद्भावयभावानामनित्यतां नित्यानित्यवस्तुदर्शनो नपश्यतिशोकावेगं यतः एकमेवयदाब्रह्मसत्यमन्यद्विकल्पितं कोमोहस्तत्रकःशोकएकत्वमनुपश्यतः १५ मनः भगवतिशोकावेगदूषितेमनसिविवेकएवमे नावकाशंलभते सरस्वती वत्सस्नेहदोषएषः प्रसिद्धएवायमर्थः स्नेहःसर्वानर्थप्रभवः

प्युदीरितं उक्तमर्थंउपनिषदारूढंविशदीकरोति एकमेवेति यदायदिएकं निरस्तसद्वितीयंब्रह्मैवसत्यंइतरत्ब्रह्मान्यत् विकल्पितं अनिर्वचनीयं सद्भिन्नत्वमेवानिर्वचनीयतायालक्षणं तथाचब्रह्मान्यस्यमिथ्याभूतस्यप्रातीतिकस्यनश्वरत्वादेकत्वमेवापारमार्थिकमनुपश्यतः सम्यक्तयाजानतः तत्रकोमोहः नकोपीत्यर्थः मोहाभावात्कः शोकःनकोपीत्यर्थः एवंचसतिअंतेब्रह्मभावनयाब्रह्मैवभवति संसार्यादिभावनयांतेसंसार्येवभवति उक्तंचगीतायां यंयंवापिस्मरन्भावंत्यजत्यंतेकलेवरम् तंतमेवैतिकौंतेयसदातद्भावभावितइति अतोहेतोः शोकावेशोस्वीयंमनोनार्पणीयं अर्प्यतेचेत्तदासंसार्येवशोकादनिर्मुक्तएवस्यादितिभावः १५ भगवतीति सरस्वतीं संबोधयति हेभगवतिसरस्वति शोकावेगदूषितेमेममममनसिविवेकोवकाशंनलभतएवेतियोजना स्नेहस्यानर्थहेतुत्वंप्रकटयति

उप्यंतइति नरैर्मनुष्यैः प्रियाख्याः प्रियइत्याख्यायेषांपुत्राद्यभिलाषानांतेप्रियाख्याः नाम्नैवप्रियत्वंनस्वरूपतः नएववस्तुतःक्लेशा आउत्पत्तेरामरणमतिक्लेशजनकत्वात्सं सारहेतुत्वाच्च उप्यंतेआरोप्यंते कीदृशाः क्लेशाः विषयवल्लिबीजंविषकंदः तद्वद्विष माः दुःसहाः तेभ्यः अभिलाषेभ्यः नचिराज्झटितिस्नेहमयाः स्नेहरूपाः वज्राग्नि गर्भाः वज्राग्निवत्गर्भोयेषांतेचते अंकुराः दाहच्छेदपातादिसमर्थाः भवंति येभ्यः स्नेहांकुरेभ्यः अमीलयिदृश्यमानाः शतशः अनंताः शोकरूपाः द्रुमाः वृक्षाः रोहं तिउद्भवंतीत्यर्थः कीदृशाः शोकद्रुमाः कुकूलहुतभुक्दाहंकुकूलंतुषमेवहुतंहोम द्रव्यंभुनक्तीतिकुकूलहुतभुक्तुषाग्निस्तदग्निदाहवद्योदाहस्तंतद्वत्उपमानेकर्म-

तथाहि उप्यंतेविषवल्लिबीजविषमाः क्लेशाःप्रिया ख्यानरैस्तेभ्यःस्नेहमयाभवंतिनचिराद्वज्राग्निग र्भांकुराः येभ्योमीशतशःकुकूलहुतभुक्दाहंद हंतःशनैर्देहंदीप्तशिखासहस्रशिखरारोहंतिशोक द्रुमाः १६ मनः देवि यद्यप्येवंतथापिनशक्नोमिशो कानलदग्धःप्राणान्धारयितुं साधुसंपन्नंयदंतका लेत्वंतावद्दृष्टासि सरस्वती इदंचपरमकृत्यंयदात्मह त्याव्यवसायइति अपिचामीषामपकारिणामर्थेको यमत्यावेगोभवतः पश्यतावत् क्वचिदुपकृतिःक र्तामीभिःकृताक्रियतेथवातवनचभवंत्येतेपुंसांस्व खायपरिग्रहाः

णिचेतिणमुल् शनैःमंदंशरीरंदहंतः कुकूलंशंकुनिष्कीर्णेश्वभ्रेन्यत्रतुषानलइति कुसुदाकरः तुषाग्निदृष्टांतोदुःखस्यचिरपाचकत्वसूचनायेतिभावः पुनःकीदृशाः शोकद्रुमाः दीप्ताःयाःशिखाःदुःखांतरस्मृतयःतासांसहस्रंशिखराःअग्रभागाःउद्बो धरूपाःयेषांते १६ साधुसंपन्नंसम्यक्ज्ञानमित्यर्थः इदंचेति परंस्थूलंअकार्यंअ कृत्यं किंतदित्याह यदिति व्यवसायःउद्योगः स्वशरीरत्यागेनापिदधीचिवत्सा धुषुउपकर्तव्यमित्याशंक्यनेत्याह अपिचेत्यादि अपकारिणांनिरंतरदुःखदानांभ वतोमनसः कोयमत्यावेगआदरइत्येषायोजना क्वचिदिति एतेपरिग्रहाः पुत्र कलत्रादयः तवस्वखायनभवंति ममस्वखायमाभूवन् अन्येषांपुंसांपुत्रकलत्रत्वा

देवस्रुखदायका भविष्यंतीत्याशंक्य अन्येषामपिपुंसांनएभ्यः कोप्युपकारकइत्या
ह अमीभिः कचित्कुत्रापिपुंसांउपकृतिःउपकारः कर्ताकरिष्यतेकृतावाअथक्रि
यतेनकापिकालत्रयेपिउपकुर्वंतीनिस्रुखहेतवोपिनभवंतीतिभावः ननुपुत्रादीनां
लालनादोब्रह्मानंदोनुभूयतइतिवदंतिपुत्रिणः तत्कथंपुत्रादीनांनस्रुखजनक
त्वमित्याशंक्याह दधतीति विरहेवियोगेमर्मच्छेदंदधतिपुष्णांति यद्यप्येवंतद
पितथापि अहोआश्चर्येजंतवः विपुलाःबहवः आयासाःश्रमायेषांते नदर्थंतत्प्रयो
जनाय अपार्थकंव्यर्थं बतइतिखेदेसीदंतिदुःखिताभवंति १७ अपिच एतेशोक
योग्याएवनभवंति अपकारित्वादित्याह अपिच तीर्णाइति एतैः पापैःकिमिव

दधतिविरहेमर्मच्छेदंनदर्थमपार्थकंतदपिविपुलाया
साःसीदंत्यहोबतजंतवः १७ अपिच तीर्णाःपूर्णाः
कतिनसरितोलंघिताःकेनशैलानाक्रांतावाकतिव
नभुवःक्रूरसंचारघोराः पापैरेतैःकिमिवदुरितंका
रितोनासिकष्टंयद्दृष्टास्तेधनमदमषीम्लानवक्त्रादु
रीशाः १८ मनः देविएवमेतत् तथापि लालितानां
स्वजातानांहृदिसंचरतांचिरम् प्राणानामिवविच्छे
दोमर्मच्छेदादरुंतुदः १९

दुरितंकष्टंकारितोनासिकिंतुसर्वंदुरितंकष्टंकारितएव कष्टमेवाह त्वयाउपयाचि
तंस्रुत्वापूर्णाः वर्षाकालीनाःसरितोनद्यः कतिकियत्संख्याः नतीर्णाः अपितुब-
ह्व्यस्तीर्णाइत्यर्थः केशैलाःनलंघिताः नाक्रांताःअपितुसर्वे क्रूराणांव्याघ्राणां
संचारेणघोराः भयानकावनभुवः अरण्यस्थल्यः कतिकियंत्योनाक्रांताः अपि
तुसर्वाएव कारितेप्येतावत्यनर्थेयित् यस्मात्कारणाद्धनमदः लक्ष्मीमदः सएव
मषीतद्युक्तानि अतएवम्लानानिशुष्काणिवक्त्राणियेषांतेदूरीशाः दुष्टप्रभवः
कष्टंयथास्यात्तथादृष्टाः एवंचकामादिभ्योविरजितव्यमितिभावः शिष्टंस्पष्टं १८
एवंवैराग्यहेतौसत्यपिवैराग्यंनोत्पद्यतइत्याह लालितानामिति स्वस्मात्स्वश
रीराज्जातानांउत्पन्नानांबालभावेचुंबनालिंगनैर्लालितानांअतएवचिरंहृदिसं
चरतांविच्छेदोवियोगः मर्मच्छेदादपिअरुंतुदःव्यथातिशयकारी तत्रदृष्टांतः
प्राणानांविच्छेदोवियोगः सयथामर्मच्छेदादतिपीडाकरः तद्वदयमपीत्यर्थः १९

वत्समममेति ममतामदीयत्वाभिमानः तस्यवासनासर्वकालमनुवृत्तिः सैवनिबंधनंका रणंयस्यसः ममतासंबंधादेवदुःखमित्यस्मिन्नर्थेसंमतिमाह उक्तंच मार्जारेति मार्जारभक्षितेगृहकुक्कुटेस्वगृहपोषितकुक्कुटेयादृशंदुःखंतादृक्तादृशंकलविंकेच टकेममताशून्येमूषकेचमार्जारभक्षितेनममताशून्यत्वात् तस्मान्ममैतेवदुःखहेतु रितिभावः २०एवंसतिममतोच्छेदएवयत्नःकार्यइत्याह तत्सर्वनर्थेति सर्वेअनर्थाय स्यादसौसर्वनिर्थःस्नेहः तस्यबीजंकारणंतादृशस्यममत्वस्योच्छेदेयत्नःकार्यः विचा राधीनोममतोच्छेदइतिदर्शयति पश्य प्रादुर्भवंतीति वपुषः शरीरात्कतिकियंतो वाकीटाः यूकादयः नप्रादुर्भवंतिनोत्पद्यंते अपितु उत्पद्यंतएव यान्कीटान्तनोः

सरस्वती वत्सममतावासनानिबंधनोयंव्यामोहः उक्तंच मार्जारभक्षितेदुःखंयादृशंगृहकुक्कुटे न तादृङ्ममताशून्येकलविंकेथमूषके २० तत्सर्वा नर्थबीजस्यममत्वस्योच्छेदेयत्नःकर्तव्यः पश्य प्रादुर्भवंतिवपुषःकतिवानकीटायान्यत्नतःखलुत नोरपसारयंति मोहःकएषजगतोयदपत्यसंज्ञांते षांविधायपरिशोषयतिस्वदेहं २१ मनः देविभव त्वेवंतथापिदुरुच्छेद्यस्तुममत्वग्रंथिः तथाहि ता वदवधारयतुभवती निरंतराभ्यासदृढीकृतस्यस स्नेहसूत्रग्रथितस्यजंतोः जानासिकिंचित्भगव त्युपायंममत्वपाशस्ययतोविमोक्षः २२

शरीरात्खलुनिश्चयेनयत्नतः यत्नपूर्वमपसारयंतिनिष्कासयंति एषःजगतोविश्व स्यमोहः कः यत्तेषांशरीरोत्पन्नानांअपत्यसंज्ञांविधायकृत्वादेहंपरिसमंतात्शोषय ति यूकादौस्वदेहोत्पन्नेपिममताभावान्नदेहशोषः पुत्रेममताभिमानस्यसत्वाद्देह शोषइत्येषकोमोहइतिभावः २१ ममत्वग्रंथिः ममताभिमानः ममत्वग्रंथेर्दुरु- च्छेद्यत्वंप्रकटयति तथाहीति अवधारयतुसावधानाभूत्वामनसिधारयतु वि स्मरणंमाभूदित्यर्थः निरंतरेति जंतोर्जीवस्यममत्वरूपोयःपाशस्तस्ययतउपा याद्विमोक्षः त्यागः तमुपायंहेभगवतित्वंकिंचिज्ज्ञानासितर्हिवदेतिशेषः कीदृश स्यममत्वपाशस्य निरंतरं अनवरतंयोभ्यासस्तेनदृढीकृतस्य पुनःकीदृशस्य

ममत्वपाशस्य स्नेहेनसहवर्ततइतिसस्नेहाः अंतःकरणवृत्तयस्ताएवसूत्राणि तैर्ग्रथितस्यगुंफितस्य २२ अनित्यताभावनमेवअनित्यतावधारणमेव प्रथमो ऽप्युपायः मुख्योहेतुः नकतीति यद्यस्माद्धेतोः तवअस्मिन्महतिविततेविस्ती र्णेसंसारेकोटयः कोटिसंख्याः पित्रादयोन गताः किंतुगताएव दाराःस्त्रियः पु त्राः पितृव्याः पितृभ्रातरः पितामहाश्चतेअपिकिंनगताः किंतुगताएवेतिसंबंधः त- स्माद्धेतोः इहजगतिसुहृदांबंधूनांविद्युत्पातवत्उज्वलान्दारुणतयाप्रकाशमा नान्क्षणंक्षणमात्रमेवसंगमोयैःतान्हृदये अंतःकरणेभूयोभूयः पुनःपुनः निवे- श्यअवधार्यसपदितत्क्षणमेवसुखीभव मंदबुद्धयः पितृप्रभृतिषुव्यर्थंउदरता

सरस्वती वत्सभावानामनित्यताभावनमेवतावन्म मतोच्छेदस्यप्रथमोऽप्युपायः तथाहि नकतिपित रोदाराःपुत्राःपितृव्यपितामहामहतिविततेसंसारेस्मि न्गतास्तवकोटयः तदिहसुहृदांविद्युत्पातोज्वला न्क्षणसंगमान्सपदिहृदयेभूयोभूयोनिवेश्यसु खीभव २३ मनः भगवतितवप्रसादादपास्तएव व्यामोहः किंतु तवमुखशशधरदीधितिगलितैर्वि मलोपदेशपीयूषैः क्षालितमपिमेहृदयंमलिनंशो कोर्मिभिःक्रियते २४ तदस्यार्द्रस्यशोकप्रहारस्य भेषजमाज्ञापयतुभगवती सरस्वती वत्सनूनमुप दिष्टमेवात्रमुनिभिः

इनंदृश्यासंतापमनुभवंतिविदुषांपुनरेवमसारेसंसारेअत्यंतकटुपरिणातौज्ञातेवैरा- ग्यमेवाविर्भवतीतिभावः २३ कथमद्यापिसंसारचक्रक्रकचसंक्रमेभ्रमामीतिआश्च र्यमिवमेभातीत्याशंक्याह भगवतीति मोहशेषोममाद्यापिनमुंचतीत्याह किंति ति हेभगवति तवमुखमेवशशधरश्चंद्रः तस्यदीधितयःकिरणास्तेभ्यःगलितानि निसृतानितैः विमलानिर्मलाउपदेशाएवपीयूषाणि अमृतानितैः मेममहृदयंमनःक्षा- लितमपिआत्मावबोधयोग्यंसंपादितमपिशोकोर्मिभिः शोकलहरीभिःमलिनंक्रि यते आक्रियतेअहोअसंभावनाविपरीतभावनासंस्काराबलवन्तइत्यर्थः २४ त दस्येति आर्द्रस्यनूतनस्यशोकएवप्रहारः तस्य मुनिभिरुपदिष्टंमार्गमुपदिशामी

त्याह अकांडेति नकांडपातः बाणप्रहारोयत्रतथाजातानामुत्पन्नानां आर्द्रा णांअभिनवानांमर्मभेदिनांव्यथाकारिणांएतादृशानांगाढाः दृढाःपुनःस्मारकायेशो काएवप्रहाराः तेषांअचिंतैवअसंकल्पएवमहौषधिः नान्यदित्यर्थः २५ अप्ये तदिति एतच्चेतोमनः वारितंनिवारितमपिचिंतासंतानैः चिंतापरंपराभिः अभिभू यतेपराभूयते तत्रदृष्टांतः अभ्रच्छेदैःमेघपटलैःइंदोरिदमैंदवंचांद्रमसंबिंब मिव कीदृशैरभ्रच्छेदैःमुहुःवारंवारं वातेनआसमंतात्हतैर्नीतैश्चालितैरित्य र्थः २६ शांतेविषयेशोकमोहादिरहितेनिवेशय गुह्यंगुप्तं आर्तानांमोहशोकपी

अकांडपातजातानामार्द्राणांमर्मभेदिनाम् गाढ
शोकप्रहाराणामचिंतैवमहौषधिः २५ मनः भग
वनिएवमेतत् दुर्वारंतुचेतः यतः अप्येतद्वारितंचिं
तासंतानैरभिभूयते मुहुर्वातहतैर्बिंबमभ्रच्छेदै
रिवैंदवम् २६ सरस्वती वत्सश्रूयतां चेतसोयं
विकारः ततःक्वचिच्छांतेविषयेचेतोनिवेशय म
नः तत्प्रसीदतुभवती कोसौशांतोविषयः सर
स्वती वत्सगुह्यमेतत् तथाप्यार्तानामुपदेशोनदो
षः नित्यंस्मरन्जलदनीलमुदारहारकेयूरकुंड
लकिरीटधरंहरिंवा ग्रीष्मेसुशीतमिववान्हृदमस्त
शोकंब्रह्मप्रविश्यभजनिर्वृतिमात्मनीनाम् २७

डितानां उपदिशति नित्यमिति हेमनस्त्वंइत्यध्याहारः अस्तःसर्वथाकालत्र येपिशोकःसंसारकारणीभूतंदुःखंयस्मिन्तादृशंब्रह्मवाएवार्थेब्रह्मैवप्रविश्य अद्वितीयत्वेनज्ञात्वा द्वितीयाद्वैभयंभवतीतिश्रुतेः भयंद्वितीयाभिनिवेशतः स्यादितिमहाभागवताच्च आत्मनेहिताआत्मनीनातांनिर्वृतिंपरमंसुखंभज प्राप्नुहि तत्रदृष्टांतः ग्रीष्मेसुशीतंन्हृदमिव यथाचंडांशुकरसंतप्तः शीतंत टिनीन्हृदं प्रविश्यसुखमनुभवतितथासंसारतप्तोब्रह्मप्रविश्यतत्सुखमनुभव तीत्यर्थः निर्गुणेनिराकारेनिर्विषयेकथंमनसः प्रवृत्तिरित्याशंक्यआदौसाकारेप्र वृत्तिःसुकरेत्याह किंकुर्वन्स्मरन्जलदनीलंघनश्यामंउदारोमूल्योयोहारः केयू रंबाहोर्भूषणंकुंडलेकर्णभूषणेकिरीटंमुकुटंएतानिधरतीतितंहरिंहरतिसंसारं

अज्ञानतत्कार्यअसौहरिस्तंनित्यंस्मरन् साकारस्मरणानंतरंनिराकारेमनसःस्व रवप्रवेशइतिभावः यथानूतनोधनुर्धरः स्थूलमपिलक्ष्यंलक्षीकर्तुमशक्नुवानो ऽ भ्यासपरिपाकवशात्केशांतरमोनबरादिकंलक्षीकरोतितद्वदित्यर्थः २७ सर्वथास र्वप्रकारेण वैराग्यप्रवेशमुपक्षिपति वत्सेति उपदेशासहिष्णुःउपदेशाग्राहि अपरं उक्तादन्यत् वशमिति पितरिजनकेतनयेपुत्रेसुहृदिसंबंधिनिवामृत्योर्मरणस्यवशं अधीनलंप्राप्तेसतिमृतेसतिइत्यर्थः जडधियोमंदमतयः उदरताडंउदरंसंताड्यालं

मनः विचिंत्यसोच्छ्वासंसर्वथात्रातोस्मिभवत्याइति पादयोःपतति सरस्वती वत्सभवत्युपदेशासहिष्णु तेहृदयंजातं भयेतदप्य परमुच्यते वशंप्राप्तेमृत्योः पितरितनयेवासुहृदिवाशु चालंतप्यंतेभृशमुदरताडं जडधियः असारेसंसारे विरसपरिणामेतुविदुषांवियोगोवैराग्यंद्रढयतिवित न्वन्शमसुखम् २८ ततःप्रवि शतिवैराग्यं वैराग्यंविचिंत्य अस्राक्षीन्नवनीलनीरजदलोपां नातिसूक्ष्मंपुनस्त्वङ्मात्रांतरिता मिषंयदिवपुर्नैतत्प्रजानांपतिः प्रत्यग्रक्षरदस्रमिश्रपिशितग्रासग्र हंगृध्रतोगृध्रध्वांक्षवृकान्शुनोनिपततःक्रौंचान्कथं वारयेत् २९

अत्यर्थंशुचाशोकेनअतिशयितशोकेनेत्यर्थः भृशंअत्यर्थंतप्यंते शुचासंतप्यंतेइ तिपाठःसुगमः तुपुनःवियोगःपुत्रादिभिःसहेत्यर्थात्विदुषांज्ञानिनांशमसुखंवितन्वन्विस्तारयन् असारेनिःसारेविरसःकटुःपरिणामःफलंयस्यतादृशेसंसारेवैराग्यं द्रढयतिदृढंकरोति २८ अस्राक्षीदिति प्रजानांपतिःधाताएतद्वपुःशरीरंलङ्

मात्रेणत्वचामात्रेणांतरितमाच्छादितंआमिषंमांसंयस्यएवंभूतंयदिपुनर्नास्त्रा क्षीत्नोत्पादयेत्तदावपुषिनिपततोगृध्रान्मांसाशिनः पक्षिणः ध्वांक्षान्का-कान्वृकान्वृन्दस्सृगालान्शुनः कुक्कुरान्क्रौंचान्चकाह्वान्मत्यग्रंनवंक्षरत्यत् अ-स्त्रंरक्तंतेनमिश्रंमिलितंयत्पिशितंमांसंतस्ययोग्रासः तस्यग्रहः आदानंयत्रयस्यां क्रियायांयथास्यात्तथा गृध्नतः कांक्षतः कथंवारयेत्नकथमपीत्यर्थः त्वङ्मात्रा-च्छादनमेवगृध्रादिनिवारणेहेतुरित्यर्थः कीदृशंवपुः नवनीलंयन्नीरजंनीलोत्पलं तस्यदलंछदः तस्योपांतोग्रभागस्तद्वदतिसूक्ष्मंअतिकोमलं २९ वैराग्यकारणीभू तंशारीरंदोषंप्रदर्श्यशरीरोपकारकेषुदोषंप्रदर्शयति श्रियइति श्रियोलक्ष्म्याः

अपिच श्रियोदोलालोलाविषयजरसाःप्रांतविर साविपद्गेहंदेहंमहदपिधनंभूरिनिधनम् बृहच्छो कोलोकःसततमबलानर्थबहुलातथाप्यस्मिन्घोरे पथिबतरतानात्मनिरता: ३० सरस्वती वत्सेतद्वैरा

ग्यंत्वामुपस्थितंनदेतत्सं भावय मनः काशिपुत्र क वैराग्यं उपसृत्याहंभोः अभिवादये मनः वत्स जातमात्रेणत्वयात्यक्तो स्मि

दोलाआंदोलिकातद्वल्लोलाश्चंचलाः विषयेभ्योजातास्त्रगादिभ्यउत्पन्नाः येरसाः सुखविशेषाः तेषांप्रांतेसमाप्तौविरसाःविषादजनकाः रसोजलंरसोहर्षोरसः शृं गारइत्यपि देहंशरीरंविपदांविपत्तीनांगेहंगृहं महदपिबह्वपिधनंभूरिबहुप्र-कारंनिधनंमरणं उक्तंचचाणाख्यनीतौ अर्थानामर्जनेदुःखमर्जितानांचरक्ष णे आयेव्ययेमहद्दुःखंकथमर्थाःसुखावहाइति लोकोजनः बृहच्छोकः बहु शोकः अबलाःस्त्रियःसततमनारतं अनर्थःस्वरूपनिंदारूपः बहुलोयास्ताः तथोक्तंविष्णुपुराणे अमेध्यपूर्णेकृमिराशिसंकुलेस्वभावगंधेप्यशुचौचसद्रवे कलेवरेमूत्रपुरीषभाजनेरमंतिमूढाविरमंतिपंडिताइति तथाप्येवंसत्यपिघोरे-भयावहेपथिसंसारेरताइतिबतमहत्कष्टमित्यर्थः परंतुआत्मनिनरताः नात्म

विचारपराइत्यर्थः तथोक्तंहरिवंशे अधस्ताच्छिद्रितंचर्मदुर्गंधिपरिपूरितम् मूत्रक्लिन्नस्यतस्यार्थेमाराजन्ब्राह्मणान्वधीःइतिश्रंभावयमानय मनइत्यादि त्यक्तोस्मीत्यंतस्कगमं तथाकरोतिपरिष्वजतीत्यर्थः तातपितः पांथानामिति पिताचमाताचबंधुश्चतनयश्चभ्राताचप्रियाच एतेषांसंयोगः सदूरवियोगएव वियोगजन्यएव कार्यकारणयोरभेदात्सवियोगएवेत्युक्तम् सदासर्वदासिद्धः यदासवियोगएवतदाविदुषांज्ञानिनांकः शोकोदयः वियोगजन्यसंयोगेदृष्टांता नाह वर्त्मनिमार्गेमाकूप्रत्यकूसंचरतांपांथानामिवभ्रम्यतांमग्नानांक्षितिरुहांत

परिष्वजस्वमां वैराग्यंतथाकरोति मनः वत्सत्वद्दर्शनात्प्रशांतोमेशोकावेशः वैराग्यंतातकोत्रशोकावेशः यतः पांथानामिववर्त्मनिक्षितिरुहांनद्यामिवभ्रश्यतांमेघानामिवपुष्करेजलनिधौसांयात्रिकाणामिव संयोगःपितृमातृबंधुतनयभ्रातृप्रियाणांसदासिद्धोदूरवियोगएवविदुषांशोकोदयःकस्तदा ३१ मनः सानंदंदेविएवमेतत् यदाहवत्सः संप्रतिहि नार्यस्तानवयौवनामधुकरव्याहारिणस्तेद्रुमाःप्रोन्मीलन्नवमल्लिकासुरभयोमंदास्तएवानिलाः अद्योदात्तविवेकमार्जिततमस्तोमव्यलीकंपुनस्तानेतान्मृगतृष्णिकार्णवजलप्रायान्मनःपश्यति ३२

रूणांनद्यामिवपुष्करेआकाशेविरुद्धक्रियवायुप्रेरितानांमेघानामिव भ्राम्यतामितिपाठेमेघविशेषणंजलनिधौसागरेसांयात्रिकाणांपोतवणिजामिव ३१ नार्यस्ताइति मनः अद्येदानींतावन्मृगतृष्णिकायांमरुमरीचिकायांकल्पितोयो ऽर्णवः तस्यपयः जलंतत्प्रायान्तन्मयान्मिथ्यारूपान्तान्पूर्वदृष्टान्पुनः पश्यति एतान्कानित्याह ताःपूर्वपरिचिताः नवयौवनास्तरुण्योनार्यः मधुकराणांभ्रमराणांव्याहारः संचारोयत्रएतादृशास्तेपूर्वपरिचिताः द्रुमाः वृक्षाः तएवमंदानिलाः वायवः कीदृशाःवायवः प्रकर्षेणउन्मीलंत्योविकसंत्योनवाः नूतनाःमल्लिकास्ताभिःसुरभयः बहलपरिमलाः कीदृ

शंमनः उद्दान्तःस्वेच्छाप्रवृत्तोयोविवेकस्तेनमार्जितंप्रोञ्छितंतमस्तोमअज्ञान
समूहएवव्यलीकमिंद्रजालकंयस्यताहृशमित्यर्थः पूर्वंयथार्थतयानुभूताववनि
तादयोन्नुरागसुखादयंनिस्सन्तएवेदानींमिथ्यात्वेनपरिज्ञातावैराग्यहेतवइतिध्व
निनं ३२ उसन्नविवेकस्यापिआश्रमग्रहणमावश्यकमित्याह वत्सयद्यपीति
गृहिणागृहस्थेनअद्यारभ्यनिवृत्तिः निर्विकाराहृत्तिः सहधर्मचारिणी सहध

सरस्वती वत्सयद्यप्येवंतथापिगृहिणामुहूर्त
मप्यनाश्रमधर्मिणानभवितव्यं तदद्यप्रभृतिनि
वृत्तिरेवतेसहधर्मचारिणी मनः सलज्जंयदा
दिशतिदेवी सरस्वती शमदमसंतोषादयश्चपु
त्रास्त्वामुपचरंतुयमनियमादयश्चामात्याः विवे
कोपित्वदनुग्रहादुपनिषद्व्यासहयौवराज्यमनु
भवतु एताश्चमैत्र्यादयश्चतस्रोभगिन्योभगव
त्याविष्णुभक्त्यानवप्रसादनायमहितास्ताःसप्र
सादमनुमानय मनः यदादिशतिदेवीतिमूर्ध्नि
निवेशिताःसर्वाएवाज्ञाइतिसहर्षंपादयोःप्रणम
ति सरस्वती एतेयम
नियमासनप्राणायामा
दयःसादरमायुष्मताद्र
ष्टव्याः एतैरेवसहायु-
ष्मान्साम्राज्यमधिति
ष्ठतु त्वयिचस्वास्थ्य
मापन्नेक्षेत्रज्ञोपिस्वांप्रकृतिमापत्स्यते यतः

मंचरतीतिसहधर्मचारिणीधर्मपत्नीत्यर्थः निवृत्तिमतःविरक्तस्यशमादयआव
श्यकाइत्यभिप्रेत्याह शमदमेति उपचरंतुसेवंतांअमात्याः प्रधानाः युवरा
जस्यकर्मयौवराज्यं मैत्रीप्रीतिः करुणामतिरितिचतस्रः महिताःप्रेषिताः आ
युष्मान्भवान् स्वास्थ्यंविषयसंबंधराहित्यं आपन्नेप्राप्तेसति क्षेत्रज्ञःतदा
त्माजीवःस्वांआत्मीयांप्रकृतिंपरमात्मभावं आपत्स्यतेप्राप्स्यते

प्रकृतिमापत्स्यनेइत्यक्तंतामेवोपपादयति त्वत्संगादिति दीव्यतिअन्यनिरपेक्षतयाप्रकाश
तेसोदेवःएकएव एकमेवाद्वितीयमितिश्रुतेः सुखदुःखादिव्यवस्थातोनानात्वप्रतीतेः क
थमेकस्तत्राह कीदृशोदेवः शाश्वतोपिषड्भावविकारशून्योपित्वत्संगात्त्वदुपकृतवि
षययोगात्प्रभवलयौजन्ममृत्यूतावेवजरातयाउपप्लुतःदृष्यकृतः बुद्धिवृत्तिषुनानेव
बहुधेव तत्रदृष्टांतः जलधेःसमुद्रस्यवीचिषुलहरीषुपवनस्फालिताक्षव्यस्ताभिन्ना
मूर्तिर्यस्यएतादृशः रविरिवयथारविरेकएवलहरीक्षोभान्नानाएवमात्माबुद्धिवृत्ति
प्रतिबिंबितत्वान्नानेत्यर्थः उक्तंच एकएवहिभूतात्माभूतेभूतेव्यवस्थितः एकधाव

त्वत्संगाच्छाश्वतोपिप्रभवलयजरोपप्लुतोबुद्धिवृत्ति
ष्वेकोनानेवदेवोरविरिवजलधेर्वीचिषुव्यस्तमूर्तिः तू
ष्णीमालंबसेचेत्कथमपिविततावत्ससंहृत्यवृत्तीर्भा
त्यादर्शेप्रसन्नेरविरिवसहजानंदसांद्रस्तदात्मा ३३
तद्भवतुज्ञातीनामुदकदानायनदीमवतरामः यदा
ज्ञापयतिदेवीतिनिष्क्रांताःसर्वे इतिश्रीप्रबोधचंद्रो
दयेवैराग्यप्रादुर्भावोनामपंचमोंकः ५

हुधाचैवदृश्यतेजलचंद्रवत्इति किंच हेवत्सकथमपिकेनापिप्रकारेणविततः
विस्तृताःविषयेषुवर्तमानाःवृत्तीःसंहृत्यसंक्षिप्यतूष्णींनिवृत्तिमालंबसेचेत्अं
गीकरोषिचेत्तदासहजानंदसांद्रःस्वाभाविकविज्ञानघनआत्माभातिप्रकाशते
कस्मिन्कइव प्रसन्नेनिर्मलेआदर्शेआसमंतात्दृश्यतेअस्मिन्नित्यादर्शः जला
दितस्मिन्नित्यर्थः निर्मलजलतैलादौयथारविर्भातितथा निर्मलासुबुद्धिवृत्तिष्वा
त्मेत्यर्थः ३३ उपसंहरति तद्भवत्विति ज्ञातीनांकामादीनांउदकदानायजलांजलिदानाय
तिलांजलिदानेकृतेनिरन्वयविनाशोभविष्यतीतिभावः अवतरामोगच्छामः इति
प्रबोधोदयव्याख्यानेप्रकाशाख्येवैराग्यप्रादुर्भावोनामपंचमोंकः ५

# सटीकप्रबोधचंद्रोदयनाटकअंकषष्ठ

पंचमेंकेवैराग्योत्पत्तिमभिधायइदानींषष्ठेंकेप्रबोधोत्पत्तिमभिधातुंजीवन्मुक्ति मुपक्रम्यतस्याःक्रमंदर्शयन्शांतिप्रवेशंप्रस्तावयति ततइति शांतिर्नमिबाह्येषु वस्तुषु अंतःकरणोपरतिः आदिष्टास्मि आज्ञप्तास्मिविदितमेवज्ञातमेव अस्तंग तेष्विति तनयेषुकामादिषुअस्तंगतेषुमृतेषुसत्सुवैराग्यंभजतेनद्वैराग्यभाक्त स्मिन्रागशून्येविशेषेणलीनोमोहोयस्मात्तादृशेमनसिप्रशमंप्रपत्यंतिकंशमं

अतःपरंजीवन्मुक्तिर्भविष्यति ततःप्रविशतिशांतिः
शांतिः आदिष्टास्मि महाराजविवेकेनयथावत्सेवि
दितमेवभवत्या यथाकिल अस्तंगतेषुतनयेषुवि
लीनमोहेवैराग्यभाजिमनसिप्रशमंप्रपन्ने क्लेशे
षुपंचसुगतेषुसमंसमीहांतत्वावबोधमभितःपुरुष
स्तनोति १ तद्भवतीत्वरिततरंदेवीमुपनिषदमनुनी
यमत्सकाशमानयत्विति विलोक्य अयेएषावास.
हर्षंकिमपिमंत्रयंतीइतएवागच्छति

प्रपन्नेप्राप्तेसतिपंचसुक्लेशेषुअविद्याअस्मितारागद्वेषाभिनिवेशाः क्लेशाः मिथ्याज्ञान मविद्याबुद्ध्यात्मनोरैक्याध्यासः अस्मिताविषयेच्छारागः ससाधनेदुःखेअप्रीति र्द्वेषः मरणाद्भयमभिनिवेशः तेषुसमंसमकालंसमीहांवासनांगतेषुसंस्काररूपतां प्राप्तेषुपुरुषः क्षेत्रज्ञः अभितः सर्वत्रस्वेषुपरेषुतत्वावबोधंस्वस्वरूपावबोधंतनोति विस्तारयति तदुक्तं योनहृष्यतिनद्वेष्टिनशोचतिनकांक्षतीति १ त्वरिततरंअ तिशीघ्रंअनुनीयसप्रेममानयित्वा मंत्रयंतीविचारयंती

राजकुलंराजगृहंपीयूषेणेवअमृतेनेव वस्तुतलमुपदिशति असतामिति यत्रय
स्मिन्राजकुलेअसतांमोहादीनांनिग्रहोदंडः यत्रयमादयःसंतः विवेकानुगामितया
त्पूज्याः यत्र जगत्स्वामीनारायणःवश्यैःशमादिभिः करणैः देवंईश्वरं अनुजीवंति
तेदेवानुजीविनोजीवाःतैःकर्तृभिः आराध्यतेपूज्यते २ अयेअद्येति अयेअद्य
खलुराजकुलमित्यादि कीदृशीकिंप्रकारास्वामिनः पुरुषस्यमनसिनिग्रहार्थं
प्रवृत्तिरित्यर्थः स्वाम्येव आत्मेवसाम्राज्यं आत्मारामत्वं अलंकरिष्यतिअंगीक

ततःप्रविशतिश्रद्धा श्रद्धा अयेअद्यखलुराज

कुलमारोग्यमालोक्यचिरेणमे
पीयूषेणेवलोचनेपूर्णे असतां
निग्रहोयत्रसंतःपूज्यायमादयः
आराध्यतेजगत्स्वामीवश्येर्देवा
नुजीविभिः २ शांतिः उपसृ
त्य अंबकिंमंत्रयंतीकप्रस्थिता

श्रद्धा अयेअद्येत्या
दिपठति शांतिः अ

थमनसिकीदृशीस्वा
मिनःपुरुषस्यप्रवृत्तिः
श्रद्धा यादृशीवध्येग्रा
त्येभवति शांतिः तत्
किंस्वाम्येवसाम्राज्यमलंकरिष्यति श्रद्धा एवमे
तत् यथात्मानमनुसंधत्तेततोदेवएवस्वाराट्सम्रा
ट्चभवति शांतिः अथदेवस्यमायायां

रिष्यति यथेति यथायतः आत्मानंपरमात्मानंअनुसंधत्तेप्रपंचप्रातिकूल्येनपर
मात्मत्वेनावधारयति ततःदेवएवस्वाराट्स्वस्मिन्आसमंतात्राजतेइतिस्वाराट्आ
त्मारामःसम्यक्चिदानंदाभेदेनराजतेइतिसम्राट्ज्ञानानंदाभिन्नइत्यर्थः तथा
चछांदोग्ये सचएषएवंविजानन्आत्मरतिरात्मक्रीडः आत्ममिथुनआत्मानंदः
सस्वराट्भवतीति अथेति मायायांमूलाविद्यायां

कीदृशः कथंअनुग्रहः नकथमपीत्यर्थः नकथमपीत्युक्तंतदेवशंकते नन्विति सर्वानिर्थबीजंसर्वेषामनर्थानांबीजंमूलंकारणंअतएवनिग्राह्येत्यर्थः स्थितिर्व्यव स्था मायानिग्रहेहेतुमाह नित्यानित्येति नित्यआत्मा ऽनित्यंततो ऽन्यत एषावि चारणाप्रणयिनीप्रणयः प्रीतिः यस्याःसाप्राणप्रिया वैराग्यंवीतरागता एकंमु ख्यंसुहृत्हिताहितप्राप्तिपरिहारजनकं समीचीनानिमित्राणियमनियमासन प्राणायामप्रत्याहारध्यानधारणासमाधयः शमोमनोनिग्रहः दमइंद्रियनिग्रहः प्रायोग्रहणात्संतोषः एतेसहायाः सहकारिणोमताः मैत्रीपरानुद्वेगजनिकावृत्तिः

कीदृशोनुग्रहः श्रद्धा ननुनिग्रहइतिवक्तव्येकथम नुग्रहः शान्तिःएवंवक्तुंदेवोपिहिसर्वानिर्थबीजमियंमा यासर्वथानिग्राह्येतिमन्यते शांतिः यद्येवंकातर्हि इदानींराजकुलस्यस्थितिः श्रद्धा शृणु नित्यानि त्यविचारणाप्रणयिनीवैराग्यमेकंसुहृत्सन्मित्राणि यमादयःशमदमप्रायाःसहायामताः मैत्र्याद्याःप रिचारिकाःसहचरीनित्यंमुमुक्षाबलादुच्छेद्यारिपव श्वमोहममतासंकल्पसंगादयः ३ शांतिः अथधर्म स्यस्वामिनः कीदृशःप्रणयः श्रद्धा पुत्रिवैराग्य सन्निकर्षात्प्रभृतिनितांतमिहामुत्रफलभोगविर सएवस्वामी तेन सनरकादिवपापफलाद्भयंभज तिपुण्यफलादपिनाशिनः

सा आदिर्यसांताः उक्तंपरिचरंतिकुर्वंतिताःपरिचारिकाः उक्तकारिण्यइत्यर्थः मु मुक्षामोक्षेच्छासहचरीसखीइत्यर्थः अतस्मिंस्तद्बुद्धिर्मोहः ममतास्वकीयत्वाभि मानः संकल्पोमनसोभिनिवेशः संगोविषयसांमुख्यं एतेरिपवः बलात्आत्मजि ज्ञासाबलान्नित्यंअवश्यंउच्छेद्याः नाशनीयाइत्यर्थः ३ इदानींधर्मस्यानुरागंपृच्छ ति अथधर्मस्येति प्रणयःप्रीतिः स्वामिनोधर्मस्येतिसमानाधिकरणेषष्ठ्यौउत्तरयति पुत्रीति हेपुत्रिवैराग्यसन्निकर्षाद्वैराग्यसंबंधात्प्रभृतिआरभ्यनितांतमतिशयेनइ हअस्मिन्लोकेअमुत्रपरलोकेफलभोगः पुत्रस्वर्गादिसाक्षात्कारः तत्रविरसएववि मुखएवेति तत्रहेतुमाह तेनसइति सस्वामीतेनहेतुनापापफलान्नरकादिवपुण्यफला

दपिस्वर्गान्नाशिनोनश्वरान्द्धयंभजतिप्राप्नोति तद्यथेहकर्मजितोलोकः क्षीयतेएवामे
वामुत्रपुण्यजितोलोकः क्षीयतइतिश्रुतेः कर्मफलानित्यत्वान्हेतोः समुझ्झितः त्यक्तः
कामसमन्वयः फलसंबंधोयस्मिन्एतादृशंसुकृतकर्मकथंचकेनापिप्रकारेणनमन्यते
नांगीकरोति काम्यंनकरोतिचेन्नाक्रियतांनित्याकरणेप्रत्यवायोस्यादित्याशंक्यने
त्याह किंत्विति स्वामिनःस्वात्मनः प्रत्यक्प्रवणतामात्मैकनिष्ठतांविचिंत्यदृष्ट्वाअ
सौधर्मः कृतंकृत्यंमनोवैराग्यरूपंकार्ययेनतादृशमात्मानंमत्वास्वयमेवशून्यव्या
पारोभूत्व्यापाररहितोभूदित्यर्थः एवमुक्तंभवति कर्माण्यनेनत्यज्यंतइतिनकिंतु
कर्मभिरेवायंत्यज्यतेइतिननित्याकरणेप्रत्यवायः तथोक्तं नकर्माणित्यजेद्योगी
त्यज्यतेकर्मभिःस्वयं यतोमोहफलंकर्मेति ननुकर्मणांस्वतंत्रफलसाधनानांकथं

इतिसमुझ्झितकामसमन्वयंसुकृतकर्मकथंचनमन्य
ते ४ किंत्वसौप्रत्यक्प्रवणतांस्वामिनोविचिंत्यकृत
कृत्यमिवात्मानंमत्वास्वयमेवधर्मःशून्यव्यापारोभूत्
शांतिः अथतानुपसर्गान्गृहीत्वामहामोहोनिलीय
स्थितस्तेषांकोवृत्तांतः श्रद्धा पुत्रितथादुरवस्था
गतेनापिमहामोहहतकेनस्वामिनःप्ररोचनायमधुम
त्याविद्ययासहोपसर्गाःप्रेषिताःअयंचाभिप्रायः य
द्येतेष्वासक्तःस्वामीविवेकउपनिषच्चिंतामपिनकरिष्य
तीति शांतिः ततः२ श्रद्धा

मनोवैमल्यहेतुत्वंअन्यहेतोरन्यत्राहेतुत्वादितिचेत् उच्यते संयोगपृथक्त्वन्या
येनेत्थंवेहि धर्मेणपापमपनुदतियोगिनःकर्मकुर्वंतिसंगंत्यक्त्वात्मशुद्धयेइति
श्रुतिस्मृत्योरुक्तत्वात् उक्तंचास्मद्गुरुभिः नित्यादिभिराराधिताराध्यपादभ
गवदनुग्रहादतिविमलमानसःस्वयमेवेत्थंजगत्तत्वमालोचयतीति अपरेत्वे
वंवर्णयंतितमेतमात्मानंवेदानुवचनेनब्राह्मणाविविदिषंतियज्ञेनदानेनतपसाना
शकेनेतिवाक्येनाग्निहोत्रादीनिज्ञानायविधीयंते नचवाच्यमधिकारांतरसंबन्ध
स्यनज्ञानाधिकारसंबंधोविनियोगविरोधादिति पशुप्रकरणेपठितात्खादिरो
यूपोभवतीतिवाक्यात्खादिरत्वंक्रत्वर्थमपितस्मिन्नेवप्रकरणेपठितेनखादिरंवी
र्यकामस्ययूपंकुर्वीतेतिवाक्यांतरेणवीर्यशेषतयाविधीयतेतद्वन्नविनियोगविरोध

इत्यलंविस्तरेण सोपसर्गस्यमहामोहवृत्तांतशेषस्यशांतिद्वाराप्रश्नमवतारयति शांतिरिति निलीयआच्छाद्यतेषांउपसर्गाणां प्ररोचनायप्रतारणायमधुमत्या कयाचित्सिद्ध्या एतेषुउपसर्गेषु उपसर्गाः अंतरायाः प्रातिभादयः प्रातिभःश्रा वणोदैवोप्नमावर्तोतिथापरो पंचैतेयोगिनांयोगविघ्नंकुर्वंतिसर्वदाइतिदत्तात्रेयेणो- क्तं कापिकमनीयरूपा ऐंद्रजालिकीअविद्यमानार्थप्रकाशरूपा शब्दानिति एषपुरुषोयोजनानांशतंक्रोशचतुष्टयमेकंयोजनंएवंयोजनशतंशब्दान्शृणो तिआकर्णयति तास्ताः अतिप्रसिद्धाः अश्रुताः वेदपुराणभारतकथाः आविर्भ वंतिप्रकटीभवंति वाङ्मयाःवाग्विकारास्तर्कादयः आविर्भवंतिस्फुरंति शब्दैभिः

ततस्तेर्गत्वाकापिस्वामिन्यैंद्रजालिकीविद्योपदर्शिता
तथाहि शब्दानेषशृणोतियोजनशतादाविर्भवंत्य
श्रुतास्ताताबेदपुराणभारतकथास्तर्कादयोवाङ्म
याः ग्रथ्नातिस्वयमिच्छयाशब्दविपदैःशास्त्राणि
काव्यानिवालोकान्भ्राम्यतिपश्यतिस्फुटरुचोरत्न
स्थलीर्मैरवीः ५ मधुमत्यानभूमिमापन्नःस्थाना
भिमानिनीभिर्देवताभिरुपच्छंद्यते भोइहोपविश्य
तां नात्र जन्ममृत्युरनुपाधिरमणीयोदेशएषत्वामु
पस्थितोविविधविलासलावण्यपुण्यमयोमंगला
र्थ्यव्यग्रपाणिःप्रणयपेशलोविद्याधरीजनः

व्याकरणशब्दैःपदैःशास्त्राणिकाव्यानिवाइच्छयास्वयंग्रथ्नातिरचयतिलोकान् भूरादीन्भ्राम्यतिगच्छति मेरोरिमाःमैरव्यःताःरत्नस्थलीःरत्नखचितानुउपरि तनभूभागान्स्फुटरुचोदेदीप्यमानान्पश्यति ५ मधुमत्यानेति मधुमत्यासिद्ध याकल्पितायाभूमिस्तामापन्नःप्राप्तःसन्इतिअध्याहारः स्थानाभिमानिनीभि र्देवताभिरुपच्छंद्यतेप्रलोभ्यते प्रलोभनमेवदर्शयति भोइहेति अनुपाधिरम णीयःसहजसुंदरः त्वामुपस्थितइति विद्याधरीजनः त्वांउपस्थितःप्राप्तः कीदृ शोविद्याधरीजनः विविधानानाप्रकाराश्चतेविलासाविभ्रमाश्चनेत्रकरचरणांग हावभावललितचेष्टाभेदाःलावण्यंचवस्त्रकनकमौक्तिकाद्याभरणानुलेपनप त्रभंगिरचनारूपंनदेवपुण्यं कार्येकारणोपचारः तन्मयस्तत्प्रधानः पुनःकी

दृशोविद्याधरीजनः दध्यादर्शादिमंगलार्थव्यग्राःपाणयोचस्यसः पुनःकीदृ शोविद्याधरीजनः प्रणयेप्रीतोकर्तव्यायांपेशलःचतुरः कनकेति कनकस्य स्वर्णस्य सिकतावालुकातद्युक्तानिस्कस्थलानियास्कताःस्त्रवतीः नदीः भजसेवय पृथुजघनाःस्थूलनितंबाः कमलवदनाःपद्मवदनाःघनाःनिबिडाःऊरवोयासांताःभ जसेवय मरकतोरत्नविशेषस्तस्यदलानितद्वत्कोमलाःवनालीःवनपंक्तीःभज नि जेनस्वेनपुण्येनजितान्अर्जितान्विषयानंदांश्चभज श्लाघ्यंअतिसमीचीनंअनुमो दितमेवमेवेदंनान्यथेत्युक्तंप्रोत्साहितंसोद्योगंकृतं भवतुकोविरोधइत्यंगीकारःसंम

तदेहि यतोत्र कनकसिकतास्कस्थलीःस्त्रवंतीःपृथु जघनाःकमलाननाघनोरूः मरकतदलकोमलाव नालीर्भजनिजपुण्यजितांश्चसर्वभोगान् ६ शांतिः ततः२ श्रद्धा पुत्रितदाकर्ण्यमायया श्लाघ्यमेतदि त्युक्तंमनसाचानुमोदितंसंकल्पेनप्रोत्साहितंस्वामी संमतिपथमिवापन्नः शांतिः सखेदंपुनरपितामेव संसारवागुरामभिपतितःस्वामी श्रद्धा नखलु २ शांतिः ततः२ श्रद्धा ततःपरिपार्श्ववर्तिनातर्केणता न्सर्वान्क्रोधावेशकषायितनयनमालोक्याभिहि तःस्वामी स्वामिन्किमेवमेभिर्विषयामिषग्रासगृध्र भिरास्थानीधूर्तकैःपुनरपितेष्वेवतथैवविषमविष यांगारेषुनिपात्यमानमात्माननावबुध्यसे ननुभोः भवसागरतारणाययासौनचिराद्योगतरिस्त्वयाश्रिता तरी त्वया

तिः वागुरांस्थूलरज्जुनिर्मितंजालं नखलुनखलुनहिनहीत्यर्थः परिपार्श्ववर्तिना निकटवर्तिना तर्केणसदसद्विचारणेनसर्वान्मायामनःसंकल्पादीन्क्रोधावेशेनकोपा विर्भावेनकषायितेआरक्तीकृतेनेत्रेयस्यांक्रियायांयथास्यात्तथा आलोक्याभिहि तःउक्तःस्वामी किमुक्तइत्याह स्वामिन्निति विषयाएवआमिषंमांसंतस्यग्रासंगृध्रं तिअभिलषंतितेगृध्रवःतैःआस्थानीधूर्तकैः सभाप्रतारणायगृहीतबकव्रतैः तेष्वेवपू र्वपरिचितेष्वेव तथैवउक्तप्रकारेणविषमाःदुःसहाःविषयाएवांगारास्तेषुनावबुध्य सेनजानासि भवेति भवएवसंसारएवसागरःसमुद्रःतस्मात्तारणायपारगमनाय

योगएवतरिर्नौकात्वयाआश्रिताप्राप्ता अधुनाइदानींतांनौकांनचिरात्शीघ्रमेवम
दात् योगविघ्नभूताहंकारात्परिमुच्यत्यक्त्वा अंगारनदींविषमविषयप्रवाहांकथंवि
गाहसेआलोडयसि ७ तद्वचनमाकर्ण्यतद्वचनंश्रुत्वाअवधीरितातिरस्कृतास्वा-
मिनापुरुषेण स्वामिनियोगंस्वामिनोविवेकस्यनियोगमाज्ञांसंपादयावःकरिष्या
वःइतिनिष्क्रांते शांतिश्रद्धेइत्यर्थात् तीर्णाइति संसारएववारांजलानांनिधिः
समुद्रः तस्यपारेपरपारेतीरंमयाअधुनाइदानींअवाप्तकल्पंप्राप्तप्रायं मयेतिस

अधुनापरिमुच्यतांमदात्कथमंगारनदींविगाहसे
७ शांतिः ततः२ श्रद्धा ततस्तद्वचनमाकर्ण्यस्व
स्तिविषयेभ्यइत्यवधार्यावधीरितामधुमती शांतिः
साधु २ अथक्कप्रस्थितास्तिभवती श्रद्धा आदि
ष्टाहंस्वामिनायथाविवेकंद्रष्टुमिच्छामि शांतिः त
त्वरतांभवती श्रद्धा तदहंराज सन्निधिंप्रस्थि
ता शांतिः अहमपिमहाराजेनोपनिषदमानेतुमा
दिष्टा तद्भवतु स्वामिनियोगंसंपादयावः इतिनिष्क्रां
ते प्रवेशकः ततःप्रविशतिपुरुषः पुरुषः विचिंत्य
सहर्षंअहोमाहात्म्यंदेव्याविष्णु
भक्तेःयत्प्रसादान्मया तीर्णाः
क्लेशमहोर्मयःपरित्यक्ताभीमाम
मत्वभ्रमाःशांतामित्रकलत्रबंधुम
करग्राहग्रहग्रस्तयः क्रोधौर्वा
ग्निरपाकृतोविघटितास्तृष्णालताग्रं
थयःपारेतीरमवाप्तकल्पमधुनासंसारवारांनिधेः ८

र्वत्रयोजनीयं अनेकानर्थव्याप्तस्यसंसारनीरनिधेःकथंपारप्राप्तिरित्यतआह ती
र्णाःक्लेशमहोर्मयइत्यादि क्लेशाःअविद्याः अस्मितादयः पंचतएवमहांत्यःऊर्मयो
लहर्यस्तीर्णाःभीमास्त्रासहेतवः ममत्वमेवभ्रमाः आवर्ताःपरित्यक्ताःवंचिताः मि
त्रंचसखाकलत्रंचस्त्रीबंधवश्च तद्वः तएवमकराःमत्स्याःग्राहाःशिशुमाराःते
षांग्रहःग्रहणंधरणंतत्पूर्विकाःग्रस्तयोग्रासाःशांताःप्रशमिताः क्रोधएवऔर्वाग्नि

वडवानलः अपाकृतः निरस्कृतः तृष्णावल्लताग्रंथयः विघटिताः वियोजिताः श्री मद्भगवद्भक्तेर्नकिमपिदुर्लभमितिभावः ८ ततइति उपनिषत् निरनुक्रोशस्यनि र्गतोऽनुक्रोशोदयायस्मात्‌निर्दयस्येत्यर्थः मुखमालोकयिष्यामीत्यनेनमानि नीत्वमादर्शितं देवीतिसंबोधनेनत्वमतिसाध्वीयसीत्वयीदमस्मिन्समयेअनु चितमितिभावः किंचित्कोपंपरिहायवदति सखिनदृष्टान्त्वयेति तांदशामेव श्रावयति शृण्विति बाह्वोरिति अहंकैः कैः दुरितैः पापैः दुर्विदग्धैः दुष्टबुद्धि

ततः प्रविशतिउपनिषच्छांतिश्च उपनिषत् सखि

कथंतथानिरनुक्रोशस्य स्वामिनोमुखमालोक यिष्यामि येनाहमित रजनयोषेवस्कचिरमे काकिनीपरित्यक्ता शांतिः देविकथंतथाविध विपत्सतितोदेवउपालभ्यते उपनिषत् सखिनदृ ष्टात्वयामेताहृशीदशायेनेवंब्रवीषि शृणु बाह्वो र्भग्नादलितमणयःश्रेणयःकंकणानांचूडारत्नग्र हनिकृतिभिर्दूषितःकेशपाशः कैःकैर्नाहिहतवि धिबलादीहितादुर्विदग्धैर्दासीकर्तुंसपदिदुरितेर्दूर संस्थेविवेके ९ शांतिः सर्वमेतन्महामोहस्यदु र्विलसितंनात्रदेवस्यापराधः

भिः हतंनष्टंयद्विधिबलंदैवबलंतस्मात्‌निर्भाग्यत्वात्सपदितत्कालमेवदासीक र्तुंस्वाधीनांसंपादयितुंनईहितानतर्किता अपितुसर्वैरपीत्यर्थः निर्भाग्यत्वेहेतुः विवेकेदूरस्थेदूरंगतेसति दासीत्वसंपादकमाह बाह्वोर्हस्तयोर्दलिताः चू र्णिताःमणयोयासांताः कंकणानांहस्तभूषणानांश्रेणयः पंक्तयः भग्नाः चूडार त्नस्यमस्तकमणेर्ग्रहणंतेननिकृतयोन्यक्काराः केशग्रहणकर्षणरूपाः तिरस्का राइतियावत् ताभिर्दूषितःत्रोटितःकेशपाशोधम्मिल्लः एवंसतिइदंफलितम् विवेकंविनान्यायमात्रदग्धचित्तैः उपक्रमोपसंहाराभ्यांश्रुतितात्पर्यनिभिज्ञैरूप

निषदउपप्लाव्यंतएव दुर्विलसितंदुश्चेष्टितं अपराधाभावंव्यनक्ति तेनहीति तेनहि हिअवधारणेमहामोहेनेवकामादिद्वारेणमनःप्रबोधयताविवेकोदूरीकृतः इतियोजना नैसर्गिकंनिरुपाधिकंस्वाभाविकमितियावत् समयप्रतीक्षणंअभ्युदयकालावेक्षणं कुलटास्त्वन्यमाश्रयंतेस्वामिनोविपदमालोक्यनसमयंप्रतीक्षंतइतिभावः संभाव

तेनहिमनःकामादिद्वारेणप्रबोधयतात्वत्तोदूरीकृतोवि वेकःएतदेवकुलस्त्रीणांनैसर्गिकंशीलं यद्दिपन्नस्य स्यस्वामिनःसमयप्रतीक्षणमिति तदेहिदर्शनप्रियाला पेनसंभावयदेवं संप्रत्यपहताविद्विषःसंपूर्णास्तेमनो रथाः उपनिषत् सखिवत्सं प्रत्यागच्छंतीवत्सयागीत याहंरहस्युक्ता यथा भर्तास्वामीचपुरुषस्त्वयाय थाप्रश्नंउत्तरेणसंभावयितव्यः तथाप्रबोधोत्पत्तिर्भवि ष्यतीति तत्कथंगुरूणामध्यक्षंधाष्ट्यंकरिष्यामि शांतिः देविअविचारणीयमेतद्वाक्यंभगवत्यागीता याः अयमेवचार्थोभगवत्याविष्णुभक्त्याविवेकस्वा मिनोनिरुक्तः तदेहिसंभावयदर्शनेनभर्तारमादि पुरुषंच उपनिषत् यथावदतिप्रियसखीतिपरि क्रामति ततःप्रविशतिरा जाश्रद्धाच राजा अयि वत्सेद्रक्ष्यति शांतिःप्रिया मुपनिषदं श्रद्धा देवगृही तोपदेशैवशांतिर्गताकथं तांनद्रक्ष्यति राजाकथमि व श्रद्धा देवप्रागेवकथितमेतद्देव्याविष्णुभक्त्यासीत्

यसंमानय अपहृतामारिता उपनिषदर्थप्रतिपादकतयागीतांविशिनष्टि वत्सयेति रहसिनिर्जनेदेशेगुरूणांविवेकप्रवर्तकानांश्वशुरादीनांअध्यक्षमग्रतः विवेकस्वामिनइतिकर्मणिषष्ठीविवेकरूपंस्वामिनंप्रतिनिरुक्तः उक्तइत्यर्थः परिक्रामतिभ्रमरिकांकृत्वागच्छतीत्यर्थः अयिवत्सेश्रद्धे गृहीतोपदेशैवगृहीताज्ञैव कथमिवेतिकु

त्रकुत्रेत्यर्थः अनुप्रविष्टा अंतर्गता तर्कविद्यायाइतिपंचमी प्रस्तोष्यतिवर्णयिष्य तिकथयिष्यतीतियावत् तदागच्छतुदेवोविवेकःपुरुषनिकटमितिशेषः एषस्वा मीपुरुषः विविक्तेएकांते प्रक्रमविरुद्धः उपक्रमविरुद्धः समुदाचारःशिष्टाचारः पितृभावंपितृत्वंआपन्नःप्राप्तः पुराहीति देवाः भूदेवाःपुरापूर्वकालेहिनिश्चितंध

यथामंदराभिधानेशैलेविष्णोरायतनेदेव्यांगीतायां तर्कविद्याभयादनुप्रविष्टेति राजा कथंपुनस्तर्कवि द्यायाभयं श्रद्धा देवतमर्थंसैवप्रस्तोष्यति तदाग च्छतुदेवः एषस्वामीत दागमनमेवध्यायन्वि विक्तेवर्तते राजा उपसृ त्यस्वामिन्नभिवादये पु रुषः वत्सप्रक्रमविरुद्धो यंसमुदाचारः यतोज्ञा नवृद्धतयाभवानेवास्मा कमुपदेशदानेनपितृभा वमापन्नः कुतः पुराहि

धर्माध्वनिनष्टसंज्ञादेवास्तमर्थंतनयानपृच्छन् ज्ञा नेनसम्यक्परिगृह्यचैतान्हेपुत्रकाःसंश्रृणुतेत्य वोचन् १० तद्भवान्पितृत्वेनास्मासुवर्ततामित्य षएवधर्मः शांतिः एषदेवविवेकेनसहस्वामीविविक्ते वर्तते तदुपसर्पतुदेवी उपनिषत् उपसर्पति शां तिः स्वामिन्नेषाउपनिषद्देवीपादवंदनायागता

र्माध्वनिधर्ममार्गेनष्टसंज्ञाःलुप्तबोधाःतमर्थंतनयान्पुत्रान्अपृच्छन् तेचपुत्रा- एतान्प्रश्नकर्तृन्ज्ञानेनहेतुनापरिगृह्यस्वीकृत्यसंश्रृणुतसम्यगधिगच्छतइत्यवो चन्अवदन् तथोक्तंमनुना अध्यापयामासपितॄन्शिशुरांगिरसःकविः पुत्रका इतिहोवाचज्ञानेनपरिगृह्यतानिति एतेनान्यसंबंधापेक्षयाज्ञानसंबंधस्यमहत्त्वंदर्शि तम् १० ज्ञानसंबंधात्पितृत्वमेवत्वयिउचितमित्याह तद्भवानिति देवेनविवेकेन-

स्वामीपुरुषः अनुग्रहेति अनुग्रहविधौअनुग्रहेकर्तव्येदेव्याःउपनिषदःमातुश्च अंतरंभेदः महत्महान्अंतरमेवाहमातेति निबध्नातिसंसारेप्रक्षिपति देवीउपनिषत् संबंधं संसारंनिकृंततिछिनत्ति ११ क्कुत्र नीतानीति अमूनिएतानिवासराणिदिनानिमठाअवधूतनिवासस्थानानिचत्वरानानाविधजनोपदेशस्थानानिशून्यदेवागाराणिशून्यदेवालयानिएषुमूर्खश्चतेमुखराश्चवाचालाःतैःसहनीतानिअतिवाहितानितत्वंमहिमानंनखल्वितिजानंतीतिशेषः तर्हिकथमतिवाहितानीतिपृच्छति किंत्विति उत्तरत्वेनोत्तरार्धमवतारयति पूर्वश्लोकस्यतेस्वेच्छयेति

पुरुषः नखलु २ यतोमातेयमस्माकंतत्वावबोधोदयेनतदेवैवास्माकंनमस्या अथवा अनुग्रहविधौ देव्यामातुश्चमहदंतरं मातागार्दनिबध्नातिबंधंदेवीनिकृंतति ११ उपनिषत् विवेकमालोक्यनमस्कृत्यदूरेउपविशति पुरुषः अंबकथ्यतां क्कभवत्यानीताएतेदिवसाः उपनिषत् स्वामिन् नीतान्यमूनिमठचत्वरशून्यदेवागारेषुमूर्खमुखरैःसहवासराणि पुरुषः अथतेजानंतिकिमपिभवत्यास्तत्वं उपनिषत्नखलु किंतु तेस्वेच्छयाममगिरांद्रविडांगनोक्तवाचामिवार्थमविचार्यविकल्पयंति १२ तेनकेवलंतेषांपरार्थग्रहणप्रयोजनमेवमद्विचारणं पुरुषः ततः२ उपनिषत् ततःकदाचित्

तेमूर्खमुखराःस्वेच्छयागुरूपसत्तिंविनाममगिरांवाचांअर्थमविचार्यविकल्पयंति विशेषेण कल्पयंति तत्रदृष्टांतः द्रविडाद्रविडदेशस्थाःपुरुषाः तेषामंगनाः स्त्रियः ताभिरुक्ताःवाचस्तासामिवद्रविडस्त्रियःपुरुषापेक्षया ऽस्पष्टवाचोभवंतीतिद्रविडांगनादृष्टांतिताः १२ ननुतर्हितेषांबहिर्मुखानांउपनिषदर्थविचारो व्यर्थइत्याशंक्याह तेनेति तेषांबहिर्मुखानांमद्विचारणंमदर्थविचारणं परेषामर्थोधनंतस्यग्रहणंतदेवप्रयोजनंपरधनग्रहणार्थमित्यर्थः पुनरपिआगच्छंत्या कुत्रचिन्मयाकानिचिद्वासराणिअतिक्रमणीयानीतिमनसिविचार्यययज्ञविद्यास-

मीपमागतमित्याह कृष्णाजिनेति अथानंतरंमयाअध्वनिमार्गेयज्ञविद्यादृष्टा कीदृशीयज्ञविद्या कृष्णाजिनंकृष्णमृगचर्म अग्नयोगार्हपत्यादयः समिधः आज्यंघृतं जुहूःस्रुवः आदिपदात्उपभृत् ध्रुवाइत्यादीनिपात्राणितैस्तदाइष्टिः दर्शपूर्णमासेष्टिः पशुः निरूढपशुः सोमोग्नि ष्टोमः मुखमाद्योयेषांतादृशायेमखाः यागाः तैःकिलनिश्चयेनपरिवृताव्यामा पुनः कीदृशीयज्ञविद्या कर्मकांडेव्यादिष्टाउपदिष्टाउपदर्शितापद्धतिः इतिकर्तव्यताक्रमोयस्याःसा १३

कृष्णाजिनाग्निसमिदाज्यजुहूस्रुवादिपात्रैस्तथेष्टि
पशुसोममुखैर्मखैश्च दृष्टामयापरिवृताकिलकर्म
कांडव्यादिष्टपद्धतिरथाध्वनियज्ञविद्या १३ पुरुषः
ततः२ उपनिषत् ततोमयाचिंतितं अपिनामैषापु
स्तकभारवाहिनीमेज्ञास्यतितत्वं अतएवास्याःस
न्निधौकानिचिद्दासराणिनयामि पुरुषः ततः२ उ
पनिषत् ततस्तामहमुपस्थितातयाचाहमुक्तास्मि
भद्रेकिंतेसमीहितमिति ततोमयोक्तंआर्यनाथा-
स्मित्वयिनिवस्तुमिच्छामीति पुरुषः ततः२ उपनि
षत् ततस्तयोक्तंभद्रेकिंतेकर्मेति पुरुषः ततः२ उ
पनिषत् ततोमयोक्तं यस्माद्विश्वमुदेतियत्ररमते
यस्मिन्पुनर्लीयतेभासायस्यजगद्विभातिसहजा
नंदोज्वलंयन्महः शांतंशाश्वतमक्रियंयमपुनर्भा
वायभूतेश्वरंद्वैतध्वांतमपास्ययांतिकृतिनः प्रस्तौमि
तंपूरुषम् १४

चिंतितंविचारितं किंतदाह अपीति एषायज्ञविद्या नयामिपरिपालयामि उपस्थितामामा समीहितंईप्सितं त्वयित्वत्समीपेकिंतेकर्मेति तेतवकिंकर्मकार्यमित्यर्थः किमुक्तमित्याह यस्मादिति तंपूरुषंआत्मानंअहमित्यन्तमपुरुषसंबंधाल्लभ्यते प्रस्तौमिनिरूपयामि तंकंयस्माद्विश्वंजगत्उदेतिउत्पद्यते यत्रयस्मिन्नात्मनिरमतेसंतुष्टतिष्ठति यस्मिन्पुनरंतेलीयतेलयंप्राप्नोति यस्यभासाज्योतिषाजगद्विभाति प्रकाशते यस्यभासासर्वमिदंविभातीतिश्रुतेः यन्महः यस्यतेजःसहजानंदोज्वलं

सहजायतेइतिसहजः स्वाभाविकः आनंदः स्फुरवंतद्रूपउज्वलः प्रकाशोयस्य नित्य स्फुरणप्रकाशाभिन्नइत्यर्थः शांतंविकारशून्यं शाश्वतमविनाशि अक्रियंक्रियारहितं पुनःतंकं कृतिनःकुशलाः यंभूतेश्वरंभूतानामीश्वरंनियंतारमात्मानंअपुनर्भवायसंसारविच्छित्तयेयांतिप्राप्नुवंति किंकृत्वाद्वैतंभेदः सएवध्वांतंतमः अपास्यतिरस्कृत्य १४ यज्ञविद्यास्वसिद्धांतमाविष्करोति पुमानिति पुमानात्माअकर्ताकर्तृत्वशून्यः कथमीश्वरोभवेत्नकथमपीत्यर्थः तवमतेईश्वरत्वंकर्तृत्वाद्युपाधिविशिष्टंकर्तृत्वाद्यभावेनदेवनसिध्यतीतिभावः ननुतर्हिभूतेश्वराराधनंविना कथंसंसारनिरासस्तत्राह क्रियाज्योतिष्टोमादिरूपासेवभवोच्छेदकरीसंसारनाशकरी अपामसोमममृताअभूमेत्यादिश्रुतेः ननुवस्तुज्ञानमेवसंसारनाशकर

यज्ञविद्याविचिंत्यततस्तयोक्तं पुमानकर्ताकथमीश्वरोभवेत्क्रियाभवोच्छेदकरीनवस्तुधीः कुर्वन्क्रियाएवनरोभवच्छिदः शतंसमाः शांतमनाजिजीविषेत् १५ तन्मेनातिप्रयोजनंभवत्याःपरिग्रहेण तथापियदिकर्तारंभोक्तारंपुरुषंस्तोषिकियत्कालमत्रवस्तुमिच्छसिकोदोषः राजा सोपहासं अहोधूमांधकारश्यामलितदृशोदुष्प्रज्ञत्वंयज्ञविद्यायाः येनेवंकुतर्कोपहता अयःस्वभावादचलंबलाच्चलत्यचेतनंचुंबकसन्निधाविव तनोतिविश्वेक्षितुरीक्षितेरिताजगंतिमायेश्वरतेयमीशितुः १६

मिति उपनिषद्रहस्यंनिरस्यति नवस्तुधीरिति वस्तुकालत्रयाबाध्यंपरंब्रह्मतदाकाराधीःतत्साक्षात्कारः नभवच्छेदहेतुरित्यर्थः कर्मकुर्वतांजीवनमपिसुंदरमित्याह कुर्वन्निति अतएवहेतोर्नरोजीवः भवच्छिदः संसारविच्छेदिकाः क्रियाः कर्माणिकुर्वन्नेवशांतमनाःसावधानचित्तः शतंसमाः वर्षाणिजिजीविषेत्प्राणान्धर्तुमिच्छेत् कर्मिणामेवजीवनमन्येषांभस्त्रेवनिश्वसितमितिभावः १५ परिग्रहेणस्वीकारेणधूमएवांधकारः तेनश्यामलितामलिनाजातादृग्दृष्टिर्यस्याःसातस्याःदुष्प्रज्ञत्वंदुर्बुद्धित्वं दुर्बुद्धित्वमेवाह येनेवमिति येनहेतुनाएवंपूर्वोक्तप्रकारेणकुतर्केणअसत्तर्केणउपहताविमोहितातकसित्वंन्यनक्ति अयःस्वभावेति ईशितुः ईश्वरस्यमायामूलाविद्याजगंतिभुवनानितनोति

उत्पादयति मायाप्रेरकत्वेन ईश्वरस्यापिचेष्टावत्वमित्याशंक्यमायांविशिनष्टि की दृशीमाया विश्वेक्षितुः विश्वसाक्षिणः ईक्षितेन ईक्षणमात्रेणईरिता भगवदीक्ष णप्रेरितमायायाःसृष्टिकर्तृत्वंनतुसिसृक्षाद्युपाधिविशिष्टस्यकर्तृत्वमीश्वरस्येतिभा वः नन्वचेतनंचेतनाधिष्ठितमेवकार्यकरंदृष्टं यथाचक्षुरादिमायात्वचेतनाकथम न्येषामीक्षणमात्रेणकर्त्रीतिवदन्नलज्जसेइत्याशंक्यदृष्टांतेनोपपादयति अयइ ति स्वभावादचेतनंचेतनाशून्यमतएवअचलं जडंअयःलोहंलोहचुंबकपाषाणस्य सन्निधौसमीपेयथाबलाच्चलतिएवंअचेतना ऽवस्तुभूतापिमायाविश्वेक्षितुरीक्ष णेरिताजगन्निर्मातिइयमेवेश्वरताईश्वरस्येतिभावः १६ इहजगतियदज्ञानाद्रज्जु भुजंगाद्याविर्भवतितज्ज्ञानादेवतिरोभवतिनकर्मभिर्विरोधादित्यभिप्रेत्याह अप्र बोधेति अप्रबोधादज्ञानात्प्रभवोजन्मयस्यतादृशंसंसारंकर्मभिः शमयंतीयज्ञ

तस्मात्तमोंधानामेवेयमीदृशीदृष्टिः अप्रबोधप्रभवं
संसारंकर्मभिः शमयंतीयज्ञविद्यानूनमंधतमसम
धकारेणापनिनीषति स्वभावलीनानितमोमयानि
प्रकाशयेद्यो भुवनानिसप्त तमेवविद्वानतिमृत्यु
मेतिनान्योस्तिपंथा भवमुक्तिहेतुः १७ पुरुषः
ततः २ उपनिषत् ततोयज्ञविद्ययाविमृश्योक्तं त
त्सखित्वत्सन्निकर्षाद्दुर्वासनोपहतेरस्मदंतेवासिभिः

विद्यानूनंनिश्चयेनतमसेवांधतमसंअपनेतुंतिरोधातुमिच्छतीत्यर्थः कारणाभावे पिकार्यंभवतितिजल्पंतीमदतमेतिभावः ननुआत्माज्ञानादाविर्भूतंविश्वमात्मज्ञा नादेवतिरोभवतिज्ञानाज्ञानयोरेवबाध्यबाधकभावोदृष्टः शास्त्रेनकर्मज्ञानयोः ज्ञानमज्ञानस्यघातकमितिश्रुतेः अतोवस्तुज्ञानादेवाज्ञाननाशइत्यभिप्रेत्य राजाआह स्वभावेति स्वभावलीनानिनश्वराणितमः अज्ञानंतन्मयानितत्त्व- भावानिएतादृशानिसप्तभुवनानियःस्वरूपप्रकाशेनप्रकाशयेत्प्रकटीकुर्यात् तमेवस्वप्रकाशंविश्वसाक्षिणंविद्वान्तमेवजानन् अतिमृत्युंमृत्युमतिक्रां तंपरब्रह्मएतिप्राप्नोति इतराभिहितंनात्मज्ञानं मोक्षहेतुरितिमतंनिरस्यति नान्योस्तीति भवःसंसारस्तस्माद्यामुक्तिः तद्धेतुःपंथाः उपायः नान्योस्तीत्य र्थः तमेवविदित्वातिमृत्युमेतिनान्यःपंथाविद्यतेयनायेतिश्रुतेः १७ विमृश्यविचा

र्य दुर्वासनोपहतैः दुर्बुद्धिग्रस्तैः अंतेवासिभिःशिष्यैः श्लथादरैर्मंदादरैः स्व-
स्याभिलषितःइष्टः प्रस्थितानिर्गता मीमांसास्वरूपमाह विभज्येति मीमांसा
मयादृष्टेतिपूर्वपङ्क्तिकास्थपदेष्वन्वयः श्लोकेसंबध्यते कीदृशीमीमांसा अधि
कारःकर्मफलभागित्वरूपः तंभजंते तानिज्योतिष्टोमादीनिकर्माणिविभज्यफ
लभेदात्कर्मभेदंप्रतिपाद्य अंगैःप्रयाजानुयाजादिभिःविचित्रैः नानाभेदभिन्नैः
सन्निपत्यारादुपकारिभिः प्रामोपदेशैःसाक्षादुपदिष्टैः अतिदेशाःअन्यत्रश्रुत

कर्मसुश्लथादरैर्भवितव्यं तत्प्रसीदतुभवतीस्वा
भिलषितदेशगमनाय पुरुषः ततः२ उपनिषत्
ततोहंतामतिक्रम्यप्रस्थितापुरुषः ततः२ उपनिष
त् ततःकर्मकांडसहचरीमीमांसामयादृष्टा विभ
ज्यकर्मण्यधिकारभांजिश्रुत्यादिभिश्चानुगता
प्रमाणैः अंगैर्विचित्रैरभियोजयंतीप्रामोपदेशै
रतिदेशगैश्च १८ पुरुषः ततः२ उपनिषत् ततोहं
तामपितथैवाश्रयमभ्यर्थितवती अथतयाप्यु
क्तास्मि भद्रेकिंकर्मासीति ततोमयातदेवोक्तम्
यस्माद्विश्वमित्यादिपठति पुरुषः ततः२ उपनि
षत् ततोमीमांसयापार्श्ववर्तिनांमुखमवलोक्या
भिहितं अस्त्येवास्माकमुपलोकांतरफलोप
भोगयोग्यपुरुषोपनयनेनोपयोगः तत्क्रियतामे
षाकर्मनियुक्ता

स्यान्यत्रसंबंधः तेनापिप्रमाणेनप्रामैः अभियोजयंती उपकुर्वाणा पुनःकीदृ
शीमीमांसा श्रुत्यादिभिःश्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यादिप्रमाणैः अ
नधिगतार्थबोधकैः अनुगतायुक्ता १८ अभ्यर्थितवतीयाचितवती पार्श्ववर्ति
नांसमीपवर्तिनां किमभिहितंतदाह अस्त्येवेति लोकांतरफलंस्वर्गसुखादि
रूपंतदुपभोगेयोग्यस्यपुरुषस्यउपनयनेनप्रतिपादनेनउपयोगःप्रयोजनं
अस्याः उपनिषदः अस्त्येवेतियोजना ततःकिंतत्राह तदिति तत्तस्माद्धेतो
रेषाउपनिषत्कर्मणिनियुक्ताक्रियतांक्रियतामित्यर्थः

एनत्कर्मोपिमुक्तत्वं अनुमोदितमेवसाधुइतिस्वीकृतमेव प्रसिद्धारव्याताम निष्ठायस्यतेनमीमांसायात्हृदयस्यतात्पर्यस्याधिदैवतंतेनअधिष्ठातृदेवतयेत्य र्थः कुमारिलस्वामिनाभट्टाचार्येणप्रोक्तंप्रतिपादितं किंप्रतिपादितंतदाह दे वीति उपनयतिप्रतिपादयति तर्हिकीदृशंप्रतिपादयतीत्याह किंत्विति ननुअक र्त्तअभोक्त्रेवसिद्ध्यतांकाहानिस्तत्रेव नचासाविति ननुअकर्तुरभोक्तुरीश्वरस्य कर्मोपयोगेबाधकाभावात् तादृशस्यापिकर्मोपयोगितास्त्वित्याशंक्याह ततो परेणेति अपरेणमीमांसैकदेशमतावलंबिना किमुक्तमित्याह अथेति लौकि कात्लोकप्रसिद्धात्पुरुषात्जीवात्अन्योनामईश्वरः किमस्तिनास्तीत्यर्थः

तत्रतेषामंतेवासिनांमध्येकेनाप्यंतेवासिनेतदनुमो
दितमेव अपरेणतुप्रसिद्धप्रतिष्ठेनमीमांसात्हृद
याधिदैवतेनकुमारिलस्वामिनाप्रोक्तं देविनेयंक
र्मोपियुक्तंपुरुषमुपनयति किंतु अकर्तारमभो
क्तारमीश्वरं नचासावीश्वरःकर्मस्वूपयुज्यतेततो
परेणोक्तं अथकिंलौकिकात्पुरुषादन्यईश्वरो
नामास्ति ततःतेनविहस्यपुनरुक्तं अस्ति तथा
हि एकःपश्यतिचेष्टितानिजगतामन्यस्तुमोहां
धधीरेकःकर्मफलानिवांछतिददात्यन्यस्तुतान्य
र्थिने एकःकर्मसुशिष्यतेनतुभृतांशास्तेवदेवोपरो
निःसंगःपुरुषःक्रियासुसकथंकर्तेतिसंभाव्यते १९

तेनकुमारिलस्वामिनाजीवादन्यईश्वरोनास्तीतिश्रुत्वाविहस्येत्युक्तं किमुक्तंत दाह अस्तीति जीवादन्यईश्वरोस्तीत्यर्थः तदेवाह तथाहि एकइति एकःई श्वरः जगतांचेष्टितानिकर्माणिपश्यति विश्वसाक्षित्वादित्यर्थः तुपुनः अन्यो जीवः मोहांधधीर्मोहाहृतज्ञानः तथोक्तंगीतायां अज्ञानेनावृतंज्ञानंतेनमुह्यं तिजंतवइति एकोजीवःकर्मफलानिपुत्रपश्वादीनिवांछतिकामयति तुपुनर न्यःईश्वरःतानिकर्मफलानिअर्थिनेअभिलाषवतेददाति एकोजीवःकर्मसु ज्योतिष्टोमादिषुशिष्यतेनियोज्यतेआज्ञाप्यतेइतियावत् अपरोदेवःईश्वरःत नुभृतांप्राणिनांशास्तेव एवंजीवादतिविलक्षणःईश्वरःलौकिकपुरुषादन्योने

तिकथंसंभावनापीत्याह निःसंगइति निःसंगःसंगरहितः असंगोह्ययंपुरुषइत्या
दिश्रुतेः पुरुषःपुराणःपूर्णत्वाद्वापुरुषःपरमात्माक्रियास्रुकर्मस्रुकर्तृइतिकथंसं
भाव्यतेनकथंचित्संभावयितुमपिशक्यतेइत्यर्थः १९ राजाविवेकः साधुप्रज्ञोसि
उत्कृष्टप्रज्ञोसि स्वोक्तेर्थेसंमतित्वेनार्थतःश्रुतिमवतारयति द्वौताविति नौप्रमि-
द्धौस्रुपर्णौस्रुष्ठुपर्णंगतिर्ययोस्तौ पर्णगतौसहायेचपतत्रांगरुहेषितिविश्वः अ
व्याहतज्ञानावित्यर्थः सयुजौसहयोगवंतौसखायौपरस्परानुकूलौद्वौजीवात्मप
रमात्मानौसमानंएकंवृक्षंशरीरंपरिषस्वजाते आलिंगयतःस्वीकुर्वतः इतियावत्
अनयोःकार्यभेदमाह तयोःमध्येएकोजीवःपक्वंपिप्पलंकर्मफलंअत्तिभुंक्ते अ-
न्यःईश्वरः अनश्नन्अभुंजानः अभिचाकशीतिसाक्षित्वेनपश्यतीत्यर्थः २० उप

राजासहर्षं साधुकुमारिलस्वामिन्साधुप्रज्ञोस्या
युष्मन् द्वौतौस्रुपर्णौसयुजौसखायौसमानंवृक्षं
परिषस्वजाते एकस्तयोःपिप्पलमत्तिपक्वमन्यस्त्व
नश्नन्नभिचाकशीति २० पुरुषः ततः२ उपनिषत्
ततोहंमीमांसामभिमंत्र्यप्रस्थिता पुरुषः ततः२
उपनिषत् ततोमयाबहुभिःशिष्यैरुपास्यमाना
स्तर्कविद्या अवलोकिताः काचिदीश्वरविशेषकल्प
नपरान्यायैःपरातन्वतीवादंसच्छलजातिनिग्रह
मयैर्जल्पंवितंडामपि

निषत् ततःतदनंतरंमयाबहुभिःशिष्यैः अंतेवासिभिःउपास्यमानाःसेव्यमानाःन्या
यविद्यापातंजलन्यायकणादसांख्यनिर्मिताःशास्त्ररचनाः प्रतिपादयंति काचि
दिति काचित्पतंजलिनिर्मिताविश्वस्माद्योविशेषोजगतःक्लेशाद्यसंस्पृष्टत्वादित
त्कल्पनापरातत्प्रतिपादनपरेत्यर्थः आत्मानिर्लेपःक्लेशैःअपरामृष्टः अकर्ताभो
क्तेत्येवमादिकल्पयंतिपातंजलाः उक्तंचउदयनाचार्यैः क्लेशकर्मविपाकाशयैरप
रामृष्टोनिर्माणकायमधिष्ठायसंप्रदायप्रवर्तकोनुग्राहकश्चेति, काचिद्दित्वविशेष
कल्पनपरेतिपाठेद्वित्वाद्युत्पत्तिविनाशक्षणगणनारूपायेविशेषास्तत्कल्पनपरातत्प्र
तिपादनपराअक्षपादमुनिप्रणीताविद्या परागौतमप्रणीतान्यायविद्यान्यायैःनीय
तेप्राप्यतेविवक्षितोर्थैर्यैस्तेन्यायाःपंचावयवानुमानवाक्यानितैःवादंतत्त्वबुभुत्सु

कथां छलंअर्थांतरेणप्रत्युक्तस्यशब्दस्यार्थांतरवर्णनं जातिरसदुत्तरं निग्रहः पराहंकारनिराकरणं तन्मयैःतत्प्रधानैःन्यायैरितित्रिष्वपिसंबंधनीयं जल्पंविजिगीषुकथांवितंडामपिपरपक्षदूषणावसानांकथामपिन्यायैस्तर्कैः तन्वतीविस्तारयती अन्यासांख्यनिर्मिताविद्याप्रकृतिंगुणत्रयसाम्यावस्थांजगत्कारणभूतांविभज्यपृथक्कृत्यपुरुषस्यआत्मनोभिदांभेदंउदाहरंती कथयंतीमयाअवलोकितेतिपूर्वफक्किकास्थेनान्वयस्त्रिष्वपियोजनीयः कीदृशीसांख्यविद्या महदहंकारादीनांसर्गःसृष्टिस्तत्क्रमैः तत्वानांपंचविंशतितत्वानांगणनासंख्यातस्यांपरासावधानाप्रकृतेर्महान्महतोहंकारःअहंकारात्पंचतन्मात्राणिएवंगणनापरेत्यर्थः एतावतासांख्यपातंजलन्यायवैशेषिकशास्त्राणांक्षणलवादिगणनयैवायुःपर्यव

अन्यातुप्रकृतिंविभज्यपुरुषस्योदाहरंतीभिदांत
त्वानांगणनापरामहदहंकारादिसर्गक्रमैः ३१
पुरुषः ततः२ उपनिषत् तथैवाहंताःसमुपस्थिता
ताभिश्चानुयुक्तयामयातदेवकर्मोद्घाटितं यस्मा
द्विश्वमित्यादि ततस्ताभिःसप्रकाशोपहासमुक्तं
आःवाचालेपरमाणुभ्योविश्वमुत्पद्यते अन्यया
तुसक्रोधमुक्तं आःपापेकथमीश्वरमेवविकारिणं
कृत्वाविनाशधर्मिणमुपपादयसि

सानात् पुरुषार्थेपियोगित्वाभावादनादरणीयत्वंतेषामितिभावः ३१ तथैवाहमितिमीमांसामिवेत्यर्थः ताःविद्याःप्रतिसमुपस्थिताआगता अनुयुक्तयाकिंतेकार्यमितिपृष्टया कर्मोद्घाटितंकार्यमुक्तं किंतदित्याह यस्मादिति सप्रकाशोपहासंस्पष्टोपहाससहितंयथास्यात्तथेत्यर्थः सोपहासामुक्तिंप्रकटयति आःवाचालेति आःइतिकोपे वाचालेअनुपयुक्तभाषणशीलेपरमाणुभ्यः चतुर्विधेभ्यःविश्वंजगत्उत्पद्यते तएवोपादानीभूताइत्यर्थः ईश्वरः कर्तृत्वान्निमित्तंकुलालवदितिभावः अन्ययादूषणपुरःसरमेवमुत्तरितमित्याह अन्ययेति आःपापेब्रह्मोपादानवादिनिब्रह्मैवोपादानमितिमन्वानामृदउपादानत्वाद्विकारित्वंयथाघटशरावादिरूपेणतथाब्रह्मणउपादानत्वेविकारित्वान्नश्वरत्वमितिवदंतीनापत्रपसेइतितात्पर्यार्थः

सांख्यविद्ययेदमुत्तरमभाणीत्याह नन्विति रेइतिधिक्संबोधने प्रधानात्प्रकृतेरेवउपादानाच्चिदवच्छिन्नाद्विश्वोत्पत्तिः पुरुषस्यतुपुष्करपलाशवन्निर्लेपत्वमितिभावः उक्तंच मूलप्रकृतिरविकृतिर्महदाद्याःप्रकृतिविकृतयःसप्त षोडशकस्तुविकारोनप्रकृतिर्नविकृतिःपुरुषइति अनेककुलकोपप्लवेअवश्यापेक्षणीयोविवेकइत्याह राजेति राजाविवेकःदुर्मतित्वमुपपादयति एतदपीति परमाणवश्चप्रधानंप्रकृतिश्चतयोरुपादानकारणंसमवायिकारणं सर्वप्रमेयंप्रमाविषयःपक्षः उत्पद्यतेकार्यत्वात्घटवत्यन्नैवंतन्नैवंयथा आत्मेत्यन्वयव्यतिरेकिणापरमाणुप्रधानादीनामुत्पत्तिमत्वेभावकार्यत्वात्सोपादानत्वंवाच्यमुपादानगवेषणायामन्यस्याभावादात्मैवोपादानं नचविकारित्वापत्तिरितिवाच्यं अ-

प्रकृते-ननुरेप्रधानाद्विश्वोत्पत्तिः राजा अहोदुर्मतय
स्तर्कविद्याः एतदपिनजानंति सर्वप्रमेयजातं
घटादिवत्कार्यमितिपरमाणुप्रधानोपादानका
रणमप्यपेक्षणीयमिति तथाहि अंभःशीतक
रांतरिक्षनगरस्वप्नेंद्रजालादिवत्कार्यमेयमसत्य
मेतदुदयध्वंसादियुक्तंजगत् शुक्तौरूप्यमिव
स्रजीवभुजगःस्वात्मावबोधेह्यविज्ञातेप्रभवत्यथा
स्तमयतेतत्त्वावबोधोदयात् २२

धिष्ठातृत्वादित्यवगंतव्यं विस्तरःशास्त्रात्ज्ञातव्यः एतदेवोपपादयति तथाहि अंभइति एतत्परिदृश्यमानंजगत्कार्यंअतएवअसत्यंमिथ्याअनिर्वचनीयमिति कार्यत्वेहेतुमाह मेयमिति ज्ञानगोचरमित्यर्थः यतोज्ञानविषयः अतःकार्यमित्यर्थः अस्मिन्नर्थेदृष्टांतः अंभःशीतकरः जलचंद्रःअंतरिक्षनगरंगंधर्वनगरंस्वप्नोलोकप्रसिद्धः इंद्रजालंमंत्रादिनाअन्यथाविघटमानस्यान्यथाप्रतीतिः आदिपदादन्येभ्रमाःपीतशंखादयः तद्वत्यथाजलचंद्रादयोमेयत्वात्कार्यत्वादनिर्वचनीयाः एवंजगदितिध्वनितं जगतःकार्यत्वमुपपादयति उदयउत्पत्तिःध्वंसोविनाशः आदिपदाद्वृध्यपचयौतद्युक्तं जगतोजडत्वादस्वप्रकाशतया ज्ञानविषयत्वंआत्मनस्तुस्वप्रकाशतयानज्ञानविषयत्वमितिभावः ननुअनित्यत्वेपिजगतः नकदाचिदनीदृशंजगदित्युक्तेर्जगतः एवंरूपेणैवसर्वदासत्वात्क

थंमुक्तिरित्याशंक्याह स्वात्मावबोधइति स्वात्मावबोधेस्वप्रकाशेहरौहरत्य-ज्ञानंतत्कार्यमितिहरिः परब्रह्मतस्मिन्नज्ञातेसतिजगत्प्रभवतिउत्पद्यते अथ अनंतरंतत्वावबोधोदयात् तत्वावबोधस्यअद्वितीयब्रह्मसाक्षात्कारस्यउदयात्उत्पत्तेःजगत् अस्तमयतेप्रलीयते उभयत्रदृष्टांतः शुक्तौरूप्यमिव स्रजिमालायांभुजगःसर्पइव यथाशुक्त्यज्ञानेमालाज्ञानेचरजतभुजगयोरुत्पद्येततयोश्चतत्वावबोधात्उभयंविलीयते एवंआत्माज्ञानाज्जगद्विवर्ततेतज्ज्ञानात्विलीयतइत्यर्थः नकदाचिदित्युक्तिस्तुजगतोबहुकालावस्थायित्वेनोपपद्यतेअन्यथाश्रुतिविरोधइतिभावः २२ पातंजलपूर्वपक्षमधिक्षिपति विकारशंकाति

विकारशंकातुमुग्धवधूविकल्पविलसितमिव तथा हि शांतंज्योतिःकथमनुदितानस्तनित्यप्रकाशं विश्वोत्पत्तौव्रजतिविकृतिंनिष्कलंनिर्मलंच शश्वन्नीलोत्पलदलरुचामंबुवाहावलीनांप्रादुर्भावेभवतिनभसःकीदृशोवाविकारः २३ पुरुषः साधु २ प्रीणयतिमानसंममायंप्रज्ञावतोविमर्शः उपनिषदंप्रतिततः २ उपनिषत् ततस्ताभिःसर्वाभिरुक्तंअहोविश्वविलयेनमुक्तिमेषावदंतीनास्तिकपथंप्रस्थितानिगृह्यतामिति

ति मुग्धवधूपामरस्त्रीतस्याविकल्पोमनोविकारःतस्यविलसितमिवचेष्टितमिव विकारशंकाशूकमपिनास्तिअसन्नारोप्यतइतिभावः विकाराभावंप्रकटयति तथाहि शांतमिति शांतंअविकारि ज्योतिःप्रकाशांतरनिरपेक्षं निष्कलं निरंशं निर्मलंअज्ञानशून्यं चअनुदितःनउदितः अनुत्पन्नः अनस्तः नअस्तः अतएवनित्योयःप्रकाशःतद्रूपं एतैर्विशेषणैःसर्वथाविकारयोग्यतापि नास्तीतिसूचितं ईदृशंविश्वोत्पत्तौविकृतिंविकारंकथंव्रजतिप्राप्नोतिनकथमपीत्यर्थः अमुमर्थलोकसिद्धदृष्टांतेननिश्चिनोति शश्वन्निरंतरंनीलोत्पलदलवत्रुक्कांतिर्यासांताः तासांअंबुवाहामेघास्तेषामावलीनांपंक्तीनांप्रादुर्भावेसतिउत्पत्तौसत्यांनभसःआकाशस्यकीदृशोवाकीदृशोपिविकारःभवतिअपितुनेत्यर्थः २३ प्रीणयतिसंतोषयतिविमर्शोविचारः नास्तिकपथंवेदनिंदितमा

गंनिगृह्यतांबध्यतां ससंरंभंसकोपंपरिक्रम्यनिर्गत्य मंदरशैलस्यमंदरपर्वतस्य उपसमीपेकल्पितस्यनिर्मितस्यनातिदूरेनिकटे बाहुभंगाद्यवस्थाममसंजातेत्यग्र तनेनान्वयः बाह्वोरित्येतत्प्रथमंव्याख्यानं देवतायतनात्देवतागृहात्पुरुषैःग दापाणिभिः अतिक्रांताः अतिक्रम्यउल्लंघ्यदिगंतंगताः सर्वाः विद्याः भतिक्रामतः अभिभवतः स्वाध्यस्तंविश्वंतादात्म्यसंबंधात्साक्षादीक्षतइतिविश्वसाक्षीक्षम तेसोढुंशक्नोतीत्यर्थः प्राक्तनस्यबाह्वोर्भग्नाइत्यस्यपद्यस्यान्यदुत्तरार्धंपठति

ततःससंरंभंमांनिगृहीतुंप्रधाविताःसर्वाः पुरुषः सत्रासंततः २ उपनिषत् ततोहंसत्वरतरंपरिक्रम्य दंडकारण्यंप्रविष्टा ततोमंदरशैलोपकल्पितस्यम धुसूदनायतनस्यनातिदूरे बाह्वोर्भग्नादलितमणयः श्रेणयःकंकणानांचूडारत्नग्रहनिकृतिभिर्दूषितःके शपाशः इत्याद्यवस्थाममसंजाता पुरुषः ततः२ उपनिषत् ततोदेवायतनान्निर्गत्यगदापाणिभिःपु रुषैरतिनिर्दयंताड्यमानास्तादिगंतमतिक्रांताःसर्वाः राजा सहर्षं नखलुभवतीमतिक्रामतोभगवान्वि श्वसाक्षीक्षमते पुरुषः ततः२ उपनिषत् छिन्नामु क्तावलिरपहृतंस्रस्तमंगाद्दुकूलंभीतागीताश्रमम थगलन्नूपुराहंप्रविष्टा २४ तत्रवत्सयागीतयामां तत्रागतामालोक्यससंभ्रमंमातर्मातरितिपरिरभ्यो पवेशितास्मि विदितवृत्तांतयातयाचतथोक्तं अं बनात्रखेदयितव्यंमन्येयेखलुत्वामप्रमाणीकृत्यय थेष्टमस्फुरसत्ताःप्रचरिष्यंतितेषामीश्वरएवशास्ता

छिन्नेति मुक्तावलिःमुक्ताहारःत्रोटितः अंगात्स्रस्तं अधः पतितंदुकूलंअपहृतं बलात्गृहीतं अथअनंतरंअहंभीतासतीगीताश्रमंप्रविष्टा कीदृशीअहं गलं तीस्खलंतीनूपुरेचरणभूषणेयस्याःसा २४ तत्रेत्यादि वत्सयागीतयाउपनिषन् मूलत्वाद्वत्सयेत्युक्तम् मातर्मातरिति उक्त्वेतिशेषः मांपरिरभ्यआलिंग्यअहमुप वेशितास्मीतियोजना विदितवृत्तांतयाज्ञातसमाचारया अस्फुराणांदैत्यानांसत्व

वत्मनोवत्सलंत्वेतोचेषांनेनिर्दयत्वदयाइत्यर्थः प्रचरिष्यंतिप्रवर्तिष्यंते शास्ता दंडकर्ता कुत्रोक्तमित्याह तथाचगीतायामिति उक्तमाह तानिति अहंतान्क्रूरान् अतएवनराधमान्तथाद्विषतोद्वेषयुक्तान् अशुभान्पापिष्ठान्संसारेषुआसुरेष्वेवयोनिषुदैत्ययोनिषुअजस्रमनवरतंक्षिपामि तेषांकदापिसंसारात्निस्तारो नास्तीतिभावः सकोपमिवेत्यत्रविलोक्यवदतीतिशेषः बहिर्मुखंप्रतिकथमात्मस्वरूपंवर्णयितुंशक्यतेइत्याह कोनामेति कोनामजनः आत्मानंस्वस्वरूपमजानंतंप्रतिउत्तरंदास्यतिनकोपीत्यर्थः अंधमिवेतिदृष्टांतः केनचिदंधेनभगवत्स्वरूपंममलोचनगोचरंकरिष्यसीतिपृष्टेनयथांधंकोप्युत्तरयतितथेत्यर्थः

उक्तंचतेनभगवतातानधिकृत्य तथाचगीतायाम् तानहंद्विषतःक्रूरान्संसारेषुनराधमान् क्षिपाम्यजस्रमशुभानासुरीष्वेवयोनिषु १ इतिपुरुषः सकौतुकं देवित्वत्प्रसादात्ज्ञातुमिच्छामि कोयमीश्वरोनामेति उपनिषत् सकोपमिव कोनामात्मानमाजानंतमंधमिवप्रत्युत्तरंदास्यति पुरुषः सहर्षं कथमहमात्मापुरुषःपरमेश्वरः उपनिषत् तथाहि असौत्वदन्योनसनातनःपुमान्भवान्नदेवात्पुरुषोत्तमात्परः सएवभिन्नस्त्वमनादिमायया द्विधेवबिंबं सलिलेविवस्वतः २५

स्वस्वरूपाभेदमुपपादयति असाविति असौअपरोक्षःपुमान् यत्साक्षादपरोक्षादितिश्रुतेः त्वदन्योनत्वत्तःअन्यःभिन्नोनभवतीतिशेषः उदरमंतरंकुरुते अथ तस्यभयंभवतीतिश्रुतेः भवान्पुरुषोत्तमात्देवात्परमात्मनःस्वप्रकाशात् उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतइतिस्मृतेः परोन्योन तत्वमसीतिश्रुतेः कीदृशःपुमान् सनातनःअविनाशी ननुबाधितमर्थंवेदोपिकथंबोधयेत्स्त्वयोर्यूपःयजमानःप्रस्तरइत्यादिवत् किंच प्रत्यक्षपरिगृह्यमाणेभेदेकथंस्वरूपाद्वैतंप्रतिपाद्यतेइत्याशंक्यभेदस्त्वन्यकृतोनवास्तवइत्याह सएवेति सएवईश्वराभिन्नएवत्वंअनादिमायया अनाद्यविद्ययाभिन्नःभेदंगतः नन्वविद्यकेपिभेदेसतिकथमहमीश्वरोभवेयंइत्याशंक्यमिथ्याभूतोभेदःपारमार्थिकमभे

दंनविरोद्धुंसशक्नोतीत्याह सलिलेजलेविवस्वतःसूर्यस्यबिंबंमंडलंद्विधेवद्वि प्रकारमिव तथोक्तं एकएवहिभूतात्माभूतेभूतेव्यवस्थितः एकधाबहुधाचैव दृश्यतेजलचंद्रवत्इति अधिकंशास्त्रादवगंतव्यंइहविस्तरभयाद्विरमामः२५ तत्वमस्यादिवाक्यादपिजायमानंज्ञानंविचारंविनाअनवधारणमेवेत्याह पुरुषइति असंभावितएवार्थइत्याह अवच्छिन्नस्येति इयंदेवीउपनिषत् अवच्छिन्नस्यशरीरावच्छिन्नस्यपरिच्छिन्नस्येतियावत् भिन्नस्यभेदबुद्ध्यागृहीतस्य जरामरणेधर्मोयस्यएतादृशस्यममनित्यस्यसुखज्ञानस्वरूपतांब्रवीतिनिरूपयति इदंअसंभावितमिवेतिलक्ष्यतेइत्यर्थः २६ पदार्थानवज्ञानात्तत्त्वंपदार्थयोःसम्यगनवबोधात्वाक्यार्थोनावगम्यतइति उपनिषत्भतिपादिततत्वम-

पुरुषः विवेकंप्रतिभगवन्नुक्तमर्थंभगवत्यानसम्यगवधारयामि अवच्छिन्नस्यभिन्नस्यजरामरणधर्मिणः ममब्रवीतिदेवीयंसत्यानंदचिदात्मतां २६ विवेकः पदार्थानवज्ञानाद्वाक्यार्थोनावगम्यते आर्येणोक्तंतत्सत्यमेव पुरुषः तदवबोधाय भगवानुपायमाज्ञापयतु विवेकः अयमुच्यते एषोस्मीतिविविच्यनेतिपरितश्चित्तेनसान्द्रंकृतेतत्त्वानांविलयेचिदात्मनिपरिज्ञातेत्वमर्थेपुनः श्रुत्वातत्त्वमसीतिबाधितभवध्वांतंतदात्मप्रभंशांतंज्योतिरनंतमंतरुदितानंदंसमुद्योतते २७

स्यादिमहावाक्यार्थस्यअखंडैकरसस्यजीवपराभेदस्यानिर्धारणादित्यर्थः तदवबोधायवाक्यार्थज्ञानायभगवान्विवेकःआज्ञापयतुकथयतु एषोस्मीतीति चिदात्मनितत्पदार्थेनिष्कृष्टेश्वरचैतन्येत्वमर्थेत्वंपदार्थेनिष्कृष्टजीवचैतन्येपरिज्ञाते सतिसम्यगवबुद्धेसति पुनरनंतरंतत्वमसीतिवाक्यंश्रुत्वातत्आत्मप्रभंस्वप्रकाशंज्योतिः अंतःमनोवृत्तौअखंडवाक्यार्थरूपंसमुद्योततेप्रकाशते तथोक्तं छांदोग्ये तत्सत्यंसआत्मातत्वमसिश्वेतकेतोइतिज्योतिषोविशेषणानि अनंतं वस्तुतोदेशतःकालतश्चेतित्रिविधपरिच्छेदशून्यं बाधितंतिरस्कृतंभवःसंसारस्तस्यध्वांतंमूलकारणमज्ञानंयेन तथाशांतंनिरुपद्रवं उदितानंदंअनस्तमित

स्करूपं तत्त्वंपदार्थप्रकारमाह कस्मिन्सति एषःअहंकारःनअस्मिइति चित्तेनसार्द्धंमनसासहविविच्यपृथक्कृत्वापरितःसमंतात्सर्वेषामित्यर्थः सर्वेषांतत्त्वानांविलयेविनाशेकृतेसतिअर्थाद्विवेकतः तत्त्वंपदार्थशोधनात्असंभावनादिनिवृत्तौतत्त्वमसीत्यादिमहावाक्यादिधारणंनिश्चयरूपंभवतीतिभावः २७ परिभावयतिविचिंतयति श्रवणमननेनिरूपिते इदानींनिदिध्यासनप्रवेशमाह ततइति नितरांगूढंगुप्तंयथास्यात्तथाविवेकेनसहउपनिषत्अस्मदभिप्रायं

पुरुषः सानंदं श्रुतमर्थंपरिभावयति ततःप्रविशतिनिदिध्यासनम् आदिष्टोस्मि भगवत्याविष्णुभक्त्या यथानिगूढमस्मदभिप्राय मुपनिषद्विवेकेन सहबोधयितव्या त्वयाचपुरुषेवक्तव्यमिति विलोक्य एषादेवीविवेकपु

रुषाभ्यांनातिदूरेवर्ततेयावदुपसर्पामि उपसृत्य उपनिषदंप्रति जनांतिकं देव्याविष्णुभक्त्यासमादिष्टंयथासंकल्पयोनयोदेवताभवंति मयाचसमाधानेनविदितं यथाआपन्नसत्त्वाभवतीति

बोधयितव्येतियोजनीयं गुप्ताअस्मदीयवार्ताउपनिषद्विवेकयोरग्रेकथनीयेत्यर्थः किंबोधयितव्येत्याह त्वयाचेति पुरुषेजीवे जनांतिकंलोकसमक्षं समादिष्टमर्थमाह यथेति संकल्पयोनयः संकल्पोमनसोव्यापारः सएवयोनिःउत्पत्तिकारणंयासांताः देवताःभवंति संकल्पमात्रादेवोत्पत्तिर्नमैथुनेनेतिभावः ब्रह्मवाइदमग्रआसीदित्यारभ्यइदंसर्वमभवदित्यंतेनसंकल्पप्रभवत्वंदर्शितंबृहदारण्यके त्वयाकथमेतज्ज्ञानमित्याह मयेति समाधानेनयोगसामर्थ्यजन्यध्यानेनेत्यर्थः आप

न्मसत्वात्स्त्रीधृतगर्भा विवेकसंकल्पादेवगर्भाधानमितिभावः क्रूरसत्वाक्रूराभि
प्राया जगद्विनाशकत्वात् प्रबोधोदयश्च तत्रमनसिसंकर्षणविद्ययायोगेनाक
र्षरूपयाविद्ययाविद्यांआत्मसाक्षात्काररूपांसंक्रामयिष्यसीतियोजना श्रूय
तेहिसंकर्षणविद्ययासंकर्षणोबलदेवोदेवकीजठरात्रोहिणीजठरंप्रापितइति
श्रीमद्भागवते श्रवणमननेनिरूपितेइत्यक्तं तत्रश्रवणंनामाद्वैतेब्रह्मणिउपनि
षदांतात्पर्यविधारणंमननंनामयुक्तिभिः अनुचिंतनं एतेअर्थान्निरूपिते नि

तत्रक्रूरसत्वाविद्यानामकन्यात्वदुदरेवर्तते प्रबोधो
दयश्च तत्रविद्यांसंकर्षणविद्ययामनसिसंक्राम
यिष्यसि प्रबोधोदयंचपुरुषेसम्यग्विवेकेनसह

ततोमत्सकाशमागमिष्य
सि उपनिषत् यदादिश
तिदेवीतिविवेकमादायनि
ष्क्रांता निदिध्यासनंपुरु
षंप्रविशति पुरुषः ध्यानं
नाटयति नेपथ्ये आश्च

र्यं २ उद्दामद्युतिदामभिस्तडि
दिवप्रद्योतयंतीदिशःप्रत्यक्षस्फु
टदुत्कटास्थिमनसोनिर्भिद्यव
क्षस्थलं कन्येयंसहसासमंप
रिकरैर्मोहंग्रसंतीभजत्यंतर्धान
मुपैतिचैकपुरुषंश्रीमान्प्रबोधो
दयः २८ ततःप्रविशतिप्रबोधोदयः

दिध्यासनंनामविजातीयप्रत्ययतिरस्कारेणसजातीयप्रत्ययप्रवाहीकरणंतदप्य
र्थदेवेनिज्ञातव्यं विद्यायाः अंतःकरणवृत्तिरूपत्वान्मनसिसंक्रमणंयुक्तमितिभावः
ध्यानंनाटयतीतिनिदिध्यासनंविचारविशेषात्मकं सचविचारविशेषोध्यानात्मा
ध्यानरूपंनिदिध्यासनंपुरुषंप्रविश्यनाटयतिविस्तारयति उद्दामेति इयंकन्यावि
द्यारूपासहसाअकस्मादंतर्धानंभजतितिरोधानंप्राप्नोति कीदृशीकन्या मन-

सोवक्षस्थलंनिर्भिद्यनिर्गताइतिशेषः कीदृशंवक्षस्थलं प्रत्यक्षंसमक्षंस्फुटं निभिद्यंते उत्कटानिस्थूलानिअस्थीनियस्मिन्तत् पुनःकीदृशीकन्या उद्दामा अप्रतिहताद्भुतयएवदामानिमालास्ताभिःतडिदिवविद्युदिवदिशःप्रद्योतयंतीप्र काशयंती पुनःकीदृशीकन्या परिकरैः सेवकैः कामादिभिः समंसार्धंमोहंग्रसं तीगिलंती उत्पन्नमात्राविद्यामोहादिसर्वंविनाश्यस्वयमपिनश्यतीतिभावः च पुनःएषः श्रीमान्प्रबोधोदयः निरतिशयब्रह्मप्रकाशकएकंपुरुषंक्षेत्रज्ञंउ पैतिआविर्भवति चकारोभजत्युपैत्योः समानकालार्थः २८ किंव्याप्तमिति सो हंप्रबोधोदयोस्मि सःकः यस्मिन्प्रबोधेअभ्युदितेजातेत्रैलोक्यंजगत् एवमने

प्रबोधोदयः किंव्याप्तंकिमपोहितंकिमुद्धृतंकिंवास मुत्सारितंस्यूतंकिंनुविलापितंनुकिमि

दंकिंचिन्नवा किंचन यस्मि न्नभ्युदितेवि तर्कपदवींनैवंस मारोहतित्रैलो क्यंसहजप्रकाशदलितं

सोहंप्रबोधोदयः २९ परिक्रम्य एषपुरुषःयावदु पसर्पामि उपसृत्य भगवन्प्रबोधचंद्रोदयोऽभि वादयते पुरुषः साल्हादं एहिवत्सपरिष्वजस्वमां

नप्रकारेणवितर्कपदवींतर्कविषयंनसमारोहयति नप्राप्नोति कीदृशंत्रैलोक्यं सह जप्रकाशेनस्वाभाविकप्रकाशेनदलितंविनाशितं तर्कमेवप्रकटयति किंव्याप्तंकि माक्रांतंकिमपोहितंदूरीकृतंकिमुद्धृतंनीतंकिंवाकिंसमुत्सारितं अपसारितं किंनुस्यूतंउच्चावचवस्त्रवत्समीकृतं किमिदंनुविलापितंस्त्यानघृतवत्द्रवीकृतं किंचिदस्तिइतिशेषः वाइत्यथवाकिंचनकिमपिनास्तीत्यर्थः नुकिमित्यादिवित र्कार्थे आत्मप्रबोधेसम्यगुदितेसांसारिकत्रैलोक्यविषयानेकतर्ककर्कशापरिभाव नाविलीयते अन्यथातर्कदुर्गमप्रकारविकारपरिखाभिराहृतोन कथंचनगणय तीतिभावः २९ निर्विकल्परूपतयाविद्याप्रबोधयोराकारोनिरूपयितुंनशक्यत

इतितयोरवस्थैवपात्रद्वारानिरूपितेतिज्ञेयंयथायोग्यसंभावनया पुरुषेप्र-
बोधस्यजातत्वात्वत्सइतिसंबोधनं विघटिततिमिरपटलंतिमिरंअज्ञानमेवप
टलंआच्छादकंविघटितंविनाशितंयस्मिन्नेवंभूतंप्रभातमिवसंजातं संसारऱा
त्र्यपगमाद्बोधःप्रातःक्षणोमतइत्युक्तत्वादितिभावः तदेवदर्शयति तथाहि
मोहेति कोपिविशिष्ट्याशक्यवचनःतुषाराःहिमाःरश्मयोयस्यप्रबोधश्चासो
तुषाररश्मिश्चतादृशःप्रबोधचंद्रइत्यर्थः तथाअजनिप्रादुर्भूतः येनप्रबोध
चंद्रेणकृत्वावेदबोधितफलावश्यंभाविनिश्चयःश्रद्धादृश्यमनात्म दृष्टिरात्मे
त्यादिविवेकमतिःशांतिरिंद्रियनियमः यमनियमादिकंव्याख्यातं विश्वात्म

तथाकरोति पुरुषः सानंदं अहोविघटितंतिमिर
पटलंप्रभातंसंजातं तथाहि मोहांधकारमवधू
यविकल्पनिद्रामुन्मथ्यकोप्यजनिबोधतुषाररु-
श्मिः श्रद्धाविवेकमतिशांतियमादियेनविश्वा
त्मकंस्फुरतिविष्णुरहंसएषः ३० सर्वथाकृतकृ
त्योस्मिभगवत्याविष्णुभक्तेःप्रसादात् सोहमि
दानीं संगंनकेनचिदुपेत्यकिमप्यपृच्छन्गच्छन्भत
किंतफलंविदिशांदिशंवा शांतोव्यपेतभयशोकक
षायमोहःसायंगृहोमुनिरहंभवितास्मिसद्यः ३१

कंजगद्रूपंसएषोविष्णुरितिप्रस्फुरतिप्रकाशते किंकृत्वामोहःसंसारहेतुरज्ञानं
तदेवांधकारंआवरणंअवधूयनिरस्यविकल्पोभ्रमएवनिद्रातामुन्मथ्यत्यक्त्वा
यमादिकेनेतिपाठेयमादिकेनबोधतुषाररश्मिरजनीत्यन्वयः ३० उत्पन्नब्रह्म
साक्षात्कारस्यवर्तमानप्रारब्धस्यावस्थामाह संगंनकेनचिदिति सोहंसायं
कालेनविशिष्टंस्थानमेवगृहंयस्यससायंगृहःमुनिर्मननशीलःसद्योभविता
इदानींभविष्यामीत्यर्थः संगंयदृच्छावशात्केनचिदपिउपेत्यप्राप्यकिमपिनअ
पृच्छन्पृष्टवान्प्रयोजनाभावादितिभावः दिशंप्राच्यादिविदिशं अग्नेयादिनत
र्कितंफलंप्रयोजनंयथास्यात्तथागच्छन्परिभ्रमन् शांतःरागद्वेषादिशून्यः
व्यपेताःगताःभयंचशोकश्चकषायश्चप्रारब्धातिरिक्तकर्मफलभोगःमोहश्चयस्मा

त्तादृशः ३१ प्रशांताराातिंनिर्दलितमोहंभवंतंविवेकं अतःपरंअतोऽस्मात्परंउत्कृ ष्टं अतःपरमित्युक्तस्यार्थंवदन्फलितमर्थमाह प्रशांतेति विवेकःकृतकृत्यतां अगमत्परिनिष्पन्नकार्योभूत् कीदृशोविवेकः प्रशांतोध्वस्तःअरातिर्मोहरूपः शत्रुर्येनसः यद्वा प्रकर्षेणशांतःकामक्रोधादिअरिषड्वर्गोयेन विद्याप्रबोधौश्रीमत्याविष्णुभक्तेःप्रसादान्महामोहंससैन्यंविनाश्यश्रीमताविवेकेनसमुत्पादिताविनिध्वनितं भोनीरजाक्षिकमलनयनेसदानंदेपदेअविनाशिपरब्र

ततःप्रविशतिविष्णुभक्तिः विष्णुभक्तिः सहर्षं

उपसृत्य चिरेणवत्सस्माकंसंपन्नाःसर्वेमनोरथाः येनप्रशांतारातिंभवंतमवलोकयामि पुरुषः देव्याविष्णुभक्तेःप्रसादात्किंनामदुष्करमितिपादयोः पतति विष्णुभक्तिः पुरुषमुत्थापयति उत्तिष्ठवत्सकिंतेभूयःप्रियमुपकरोमि पुरुषः अतःपरमपिकिंप्रियमस्ति

यतः प्रशांतारातिरगमद्विवेकःकृतकृत्यताम्
नीरजस्केसदानंदेपदेत्वाहंनिवेशितः ३२

ह्मपदेजीवन्मुक्तिलक्षणेअहंनिवेशितःस्थापितः इतोन्यःपुरुषार्थोनास्तीतिभावः नीरजस्केसदानंदेइतिपाठेनिर्गतंरजःआवरणरूपंयस्मात्तस्मिन् निरावरणेपदेइत्यस्यविशेषणम् ३२ नीरजस्क सकलशास्त्र रहस्यंप्रबोधचंद्रोदयाख्यनाटकच्छलेनआपाततःप्रदर्श्यस्थलेस्थलेपूर्वपक्षपरपक्षौहत्वा वेदांतसिद्धांतानपिप्रदर्श्यविवेकपुरःसरंकामक्रोधादिपाखंडागमपराजयद्वाराचसर्वानपिसंसारनिराकरणपरिपंथिनःपराभूयंतेअंतेवासिनप्रतिदयापात्रंसम्यगवबोध्यविष्णुभक्तिंप्रार्थयंतः

श्रीकृष्णमिश्राः ग्रंथांतेआशीर्लक्षणंमंगलमाचरंति तथापिएतदस्त्विति पर्ज
न्यइति पर्जन्योजलपूर्णोमेघः अस्मिन्जगतिअस्यांभूमौमहतींइष्टांसमयेयाव
दपेक्षितां इष्टामितिपाठेनातिवृष्टिंनिवारयति विधत्तांकरोतु गलितोनष्टःउपप्लु
तोदेशराज्याद्युपद्रवोयेभ्यःतेराजानः क्ष्मांपृथिवींपालयंतु संसारिभ्यःआशिषो
दत्वाज्ञानिभ्योपिददाति महांतःज्ञानिनःत्वत्प्रसादात्विष्णुभक्तिप्रसादात्सं
सारएवाब्धिःसमुद्रस्तंतरंतु समुद्रसाम्यमाह विषयाःस्त्रगादयःममतामभता

तथापि एतदस्तुभरतवाक्यं पर्जन्योस्मिन्जग
तिमहतींवृष्टिमिष्टांविधत्तांराजानःक्ष्मांगलितवि
विधोपप्लवाःपालयंतु तत्वोन्मेषोपहततमसस्त्वत्
प्रसादान्महांतःसंसाराब्धिंविषयममतातंकपंकंत
रंतु ३२ इतिनिष्क्रांताःसर्वे इतिश्रीकृष्णमिश्र
विरचितेप्रबोधचंद्रोदयेजीवन्मुक्तिर्नामषष्ठोंकः६
समाप्तश्चायंप्रबोधचंद्रोदयोनामाग्रंथः

भिमानः आतंकोभयंएतान्येवपंकः कर्दमोयस्मिन्तं कीदृशाःमहांतः तत्वानांउ
न्मेषःसाक्षात्कारस्तस्मादुपहतंविनाशितंतमः अज्ञानंयेषांते विष्णुभक्तेःप्रसा
दात्सर्वंप्राप्यत्वइतिभावः ३२ अंकसमाप्तिंद्योतयति इतिनिष्क्रांताःसर्वेइति
अंकसमाप्तौसर्वेषांनिष्क्रमणमित्यर्थः इतिश्रीमद्भट्टविनायकात्मजदीक्षि
तरामदासविरचितेप्रकाशाख्येप्रबोधचंद्रोदयनाटकव्याख्यानेजीवन्मुक्तिनि
रूपणंनामषष्ठोंकःसमाप्तः ६ समाकृतंसंस्कृतमत्रकिंचिद्व्याख्यायतात्पर्यम
पार्थिकिंचित् तत्राप्यशुद्धंयदिकिंचिदस्तितच्छोधनीयंविबुधैर्नमूर्खैः १